सकलमिदमहं च वासुदेवः
  परमपुमान् परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते
  हृदयगते व्रज तान् विहाय दूरात् ॥

अयं भवो भवन्तश्च ब्रह्मा देवा महर्षयः ।
समुद्रा गिरयो नद्यः सर्वं नारायणात्मकम् ॥

आधिक्यन्यूनताबाध्यबाधकत्वेन वर्तते ।
भवानहं च विश्वात्मन्नेकमेव हि कारणम् ॥

योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ॥

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते बहुधाऽशुचौ ॥

ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरिम् ।
ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्वघम् ॥

आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तः सर्वमभूद्विश्वं त्वयि सर्वं प्रलीयते ॥

अहं त्वं सर्वगो देव! त्वमेवाहं जनार्दन! ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥

नामानि तव गोविन्द! यानि लोके महान्ति वै ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

त्वद्विस्तारो यतो देव! अहं भूतपतिस्तथा ।
न तदस्ति विभो! देव! यत्ते विरहितं क्वचित् ॥

यदासीद्वर्तते यच्च यच्च भावि जगत्पते ! ।
सर्वं त्वं देव ! देवेश ! विना किञ्चित्त्वया न हि ॥

त्वदुपासा जगन्नाथ ! सैवास्तु मम गोपते ! ।
यश्च त्वां द्वेष्टि भो देव ! स मां द्वेष्टि न संशयः ॥

एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम ! ।
नाम्नां बहुत्वं लोकानामुपकारकरं शृणु ॥

निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात् ।
विभिन्नान्येव साध्यन्ते फलानि द्विजसत्तम ! ॥

तथान्यत्त्वर्थसंसिद्ध्यै यद्यत्तस्मिन्निशामय ।
धर्मकृद्धर्मगुब्धर्मी धर्मात्मा विश्वकृच्छुचिः ॥

शुचिषद्विष्णुयज्ञाङ्गः पुष्कराक्षो ह्यधोक्षजः ।
शुचिश्रवाः शिपिविष्टो यज्ञेशो यज्ञवाहनः ॥

नाम्नामित्येवमादीनां समुच्चारणतो नरः ।
धर्मं महान्तमाप्नोति तथा पापस्य संक्षयम् ॥

तथार्थप्राप्तये ब्रह्मन् ! देवनामानि मे शृणु ।
येषां समुच्चारणतो वित्तमाप्नोति बुद्धिमान् ॥

श्रीदः श्रीशः श्रीनिवासः [1]श्रीधरः श्रीविभावनः ।
श्रियः पतिः श्रीपरमः श्रीमान् श्रीवत्सलाञ्छनः ॥

नृसिंहो दुष्टशमनोऽजयो विष्णुस्त्रिविक्रमः ।
रामः कृष्णोऽच्युतोऽनन्तो गोविन्दो गोपवेषधृक् ॥

---

[1] श्रीनिधिः श्रीनिकेतनः-ग.

इत्येवमादिभिर्दिव्यैर्नामभिर्भगवान् हरिः ।
श्रियः प्रयच्छते चार्थमच्युतो भक्तवत्सलः ॥

कामः कामप्रदः कान्तः कामपालस्तथा हरिः ।
आनन्दो माधवश्चैव कामसंसिद्धये जपेत् ॥

रामः परशुरामश्च नृसिंहो विष्णुरेव च ।
त्रिविक्रमश्चेत्यादीनि जप्यान्यरिजिगीषुभिः ॥

विद्यामभ्यस्यता नित्यं जप्तव्यः पुरुषोत्तमः ।
दामोदरं बन्धगतो नित्यमेव जपेन्नरः ॥

केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् ।
नेत्रबाधासु सर्वासु हृषीकेशं भयेषु च ॥

अच्युतं चामृतं चैव स्मरेदौषज्यकर्मणि ।
भ्राजिष्णुमग्निहोत्रं च जपेदालस्यपीडितः ॥

सङ्ग्रामाभिमुखे गच्छन् संस्मरेदपराजितम् ।
पाताले नारसिंहं च जलप्रस्रवणे तथा ॥

चक्रिणं गदिनं चैव शार्ङ्गिणं खड्गिनं तथा ।
क्षेमार्थी प्रवसन् राजधान्नि प्राच्यादिषु स्मरन् ॥

अजितं चाधिकं चैव सर्वं सर्वेश्वरं तथा ।
संस्मरेत्पुरुषं भक्त्या व्यवहारेषु सर्वदा ॥

नारायणं सार्वकालं क्षुतप्रस्खलनेषु च ।
ग्रहनक्षत्रपीडासु देहबाधाटवीषु च ॥

दस्युवैरिविरुद्धेषु सिंहव्याघ्रादिसङ्करे ।
अन्धकारादितीव्रे च नारसिंहमनुस्मरन् ॥

तरत्यखिलदुर्गाणि तापार्तो जलशायिनम् ।
गरुडध्वजानुस्मरणाद्विषवीर्यं प्रशाम्यति ॥

अच्युतानन्दगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥

स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे ।
कीर्तयेद्भगवन्नाम वासुदेवेति वासकृत् ॥

स्थापयेद्वित्तधान्यानि दुष्टव्यालविषेषु च ।
कुर्वीत तन्मना भूत्वा अनन्ताच्युतकीर्तनम् ॥

नारायणं शार्ङ्गधरं श्रीधरं पुरुषोत्तमम् ।
वामनं खड्गिनं चैव दुस्स्वप्नेषु च संस्मरेत् ॥

एकार्णवेऽहिपर्यङ्कशायिनं च नरं स्मरेत् ।
वाय्वग्निगृहदाहादिनिमित्तमुपलभ्य च ॥

विद्यार्थं मोहविभ्रान्तो वेगघूर्णितमानसः ।
मानुषो देवशार्दूल! सदाश्वशिरसं स्मरेत् ॥

बलभद्रं समृद्ध्यर्थं सीरकर्मणि संस्मरेत् ।
जगत्सूतिमपत्यार्थी स्तुवन् भक्त्या न सीदति ॥

जप्तव्यं सुप्रजाख्यं तु देवदेवस्य नाम तत् ।
दम्पत्योरात्मसम्बन्धविवाहाख्ये पुनः पुनः ॥

श्रीशं सर्वाभ्युदयिके कर्मण्येव प्रकीर्तयेत् ।
अनिष्टार्थेष्वल्पशेषे त्वशोकं तु सदा जपेत् ॥

स्वतन्त्रपरतन्त्रेषु वासुदेवं जपेद्बुधः ।
सर्वार्थशक्तियुक्तस्य वासुदेवस्य चक्रिणः ॥

यद्वाभिरोचते नाम तत्सर्वार्थेषु कीर्तयेत् ।
सर्वार्थसिद्धिमाप्नोति नाम्नामेकार्थता यतः ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥

एवमेतानि नामानि देवदेवस्य कीर्तयेत् ।
यं यं काममभिध्यायेत्तन्तमाप्नोत्यसंशयः ॥

सर्वान् कामानवाप्नोति समाराध्य जगद्गुरुम् ।
तन्मयत्वेन गोविन्दमित्येतद्दाल्भ्य ! नान्यथा ॥

तन्मयो वाञ्छितान् कामान् समवाप्नोति मानवः ।
वाङ्मनःकायिकं कर्म हरये तत्समर्पयेत् ॥

रामेति वर्णद्वयमादरेण
सदा स्मरन् मुक्तिमुपैति जन्तुः ।
कलौ युगे कल्मषमानसाना-
मन्यत्र धर्मे खलु नाधिकारः ॥

कृष्णः कृष्णः कृष्ण इत्यन्तकाले
जल्पन् जन्तुर्जीवितं यो जहाति ।
आद्यः शब्दः कल्पते तस्य मुक्तौ
व्रीडानम्रौ तिष्ठतोऽन्यावृणस्थौ ॥

तन्नास्ति कर्मजं लोके वाग्जं मानसमेव च ।
यत्तु न क्षीयते कर्म गोविन्दस्य च कीर्तनात् ॥

ऋग्वेदे च यजुर्वेदे सामवेदेऽप्यथर्वणे ।
पुराणे चेतिहासेऽपि ज्योतिश्शास्त्रे तथागमे ॥

तथोपनिषदां भागे कर्मकाण्डेऽपि चार्जुन! ।
आयुर्वेदे च गान्धर्वे शिल्पशास्त्रे च तान्त्रिके ॥

साङ्ख्ये च योगशास्त्रे च नानाविद्याकलाकुले ।
बहूनि मम नामानि कीर्तितानि महर्षिभिः ।

गौणानि तत्र नामानि कर्मजानि क्वचित्क्वचित् ।
तत्तत्तन्त्रेषु तन्त्रोक्तफलादीनि महान्ति च ॥ १६३ ॥

वेदे रामायणे शास्त्रे पुराणे भारते तथा ।
आदौ मध्ये तथाचान्ते विष्णुः सर्वत्र गीयते ॥

जिह्वां लब्ध्वा तु यो विष्णुं कीर्तनीयं न कीर्तयेत् ।
स महापातकी मूढो भवेन्निरयगोचरः ॥

पापव्याली मुखे तस्य जिह्वारूपेण वर्तते ।
यो न गोविन्द! गोविन्द! गोविन्देति प्रभाषते ॥

इयमेव परा हानिः परमार्गोऽयमेव च ।
अभाग्यं परमं चेति वासुदेवं न कीर्तयेत् ॥

न भजन्ति हरिं ये तु तन्मायावृतचेतसः ।
वेदशास्त्रानभिज्ञा ये केवलाग्रहकारिणः ॥

जीवन्तोऽपि मृतास्ते स्युर्ज्ञानिनो योगिनोऽपि च ।
कनिष्ठा अपि चाण्डाला विमुखा हरिनामनि ॥

एष निष्कण्टकः पन्थाः यत्र सम्पूज्यते हरिः ।
कुपथं तं विजानीयाद्गोविन्दरहितागमम् ॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां नित्यं भक्त्या यान्ति परां गतिम् ॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥

अभ्यासयुक्तयोगेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयन्ति ते ॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ! नित्ययुक्तस्य योगिनः ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन! ।
मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम् ॥

मां हि पार्थ! व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

ब्रह्मघ्नो वा पितृघ्नो वा मातृघ्नो बालघातकः ।
स्त्रीघाती गुरुघाती च अगम्यागमनी तथा ॥

सर्वपापरतश्चैव वीतनिष्कृतिकोऽपि वा ।
सुरापो वृषलीभर्ता चोरोऽपि गुरुतल्पगः ॥

स्वामिद्रोही स्वर्णहारी यश्चात्मानं निहन्ति वै ।
मुच्यते सर्वपापेभ्यो विष्णुनामानुकीर्तयन् ॥

ध्यानिनो [1] ह्यनृतं नास्ति न पुण्यं न च दुष्कृतम् ।
ध्यानेन दह्यते सर्वं ध्यायेन्नाम हरेरतः ॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥

जनार्दनेति कृष्णेति कमलावल्लभेति च ।
एतत्त्रयं प्रयुञ्जानो ब्रह्मभूयाय कल्पते ॥

प्राणायामसहस्रेण यत्पापं नश्यति ध्रुवम् ।
नामोच्चारणमात्रेण श्रीहरेस्तत्प्रणश्यति ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव! ॥

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥

---

[1] ह्यमृतं—ग.

यत्कीर्तनं यत्स्मरणं यदीक्षणं
यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं
तस्मै सुभद्रश्रवसे नमो नमः ॥

विप्राणां यतियोगिनां श्रुतिमतां वेदान्तिनां कर्मिणां
चाण्डालादिषु यौवनं च भजतामेकान्ततो वासिनाम् ।
हत्यापानसुवर्णचौर्यगुरुदारासङ्गमं कुर्वतां
सर्वेषमिदमेव नाम शरणं विष्णोः परं निर्मलम् ॥

नित्यमाराधनं विष्णोर्ध्यानं होमो जपस्तपः ।
तत्कथाश्रवणं चैव तन्नामस्मृतिकीर्तनम् ॥

तत्पादतीर्थसेवा च तन्निवेदितभोजनम् ।
प्रणामस्तस्य पुरतो वर्तनं गीतवादनम् ॥

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तां विना न तदाप्नोति नरो नारायणाश्रयः ॥

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्
नामानि रूपाणि च मङ्गलानि ।
क्रियासु यस्त्वच्चरणारविन्दयो-
राविष्टचित्तो न भवाय कल्पते ॥

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥

सवाग्विसर्गो जनताघविप्लवो
यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।

नामान्यनन्तस्य यशोऽङ्कितानि
श्रृण्वन्ति गायन्ति गृणन्ति साधवः ॥

देवर्षिभूतात्मनृणां पितॄणां
न किङ्करो नायमृणी च राजन्! ।
सर्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिहृत्य कृत्यम् ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ! मय्यावेशितचेतसाम् ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥

यद्वाचि नाम तव कामद! पद्मनाभ!
यच्छ्रोत्रयोस्तव कथामधुराक्षराणि ।
यच्चित्तभित्तिलिखितं तव तत्त्वरूपं
वैकुण्ठनामपदवी न हि तैर्दुरापा ॥

तस्मात्सर्वात्मना राजन्! हरिः सर्वत्र सर्वदा ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥

[1] एकाङ्गसङ्गिनी गङ्गा पावयेदखिलं जगत् ।
अङ्गप्रत्यङ्गसंस्थायि नाम किं कर्तुमक्षमम् ॥

यानि त्रिभुवने राजन्! तीर्थक्षेत्राणि सन्ति वै ।
विद्यन्ते तानि सर्वाणि विष्णोर्नाम्नि सहस्रशः ॥

---

[1] एकाङ्गसङ्गिनीसङ्गा—ग.

ब्रह्मा विष्णुश्च रुद्रश्च सर्वे देवाश्च शक्तयः ।
भूतयः पुरुषार्थाश्च विद्यन्ते हरिनामनि ॥

श्रुतयः स्मृतयः साङ्गाः कृच्छ्रादीनि तपांसि च ।
विष्णोर्नाम्नि प्रदृश्यन्ते सर्वे यज्ञाश्च दक्षिणाः ॥

सर्वे वेदाः सर्वविद्याः सशास्त्राः
सर्वे यज्ञा वेदविद्यश्च कृष्णः ।
विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये
तेषां राजन् ! सर्वयज्ञास्समाप्ताः ॥

ज्योतींषि शुक्राणि च यानि लोके
त्रयो लोका लोकपालास्त्रयी च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च
सर्वे देवा देवकीपुत्र एव ॥

जीवन्ति द्विजदेवदानवगणा जीवन्ति भूमीभुजो
जीवन्ति क्षणदाचरा नरमृगा जीवन्ति कीटादयः ।
गोविन्दाच्युत ! माधवेति जपतां सर्वत्र पुण्यात्मनां
येषां चेतसि चक्रपाणिचरणौ तज्जीवनं जीवनम् ॥

विसृज्य लज्जां योऽधीते मन्नामानि निरन्तरम् ।
कुलकोटिसमायुक्तो लभते मामकं पदम् ॥

यावज्जीवं प्रणवमथ वा कीर्तयद्रुद्रियं वा
याजुर्वेदं वसतिमथवा वारणास्यां विदध्यात् ।
त्यक्त्वा लज्जां कलिमलकुलध्वंसकानीरयेद्वा
विष्णोर्नामान्यनिशममृतं मुक्तिरेवं चतुर्थी ॥

प्रमाणं नैव जीवानामुत्तरक्षणजीवने ।
चरमश्वासवेलायां यत्कार्यं तत्सदा कुरु ॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

तमेव शरणं गच्छ सर्वभावेन भारत ! ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

कायवाङ्मानसैर्दोषैर्दुष्टो बहुविधैरपि ।
मम नामोच्चरन् पूतः पुरुषो नात्र संशयः ॥

नारायणेति वाग्वल्ली चातुरक्षरपल्लवा ।
धर्मकामार्थमोक्षाणां फलदा नात्र संशयः ॥

आजन्ममरणं यस्तु हरिनाम न मुञ्चति ।
स हि वेदान्तविज्ञानी ब्रह्मचर्याव्रती सदा ॥

कलौ कल्मषचित्तानां पापद्रव्योपजीविनाम् ।
विधिक्रियाविहीनानां गतिर्गोविन्दकीर्तनम् ॥

जपयोगतपोदानयज्ञाः सनियमा यमाः ।
कीर्तनस्य हरेर्नाम्नां कलां नार्हन्ति षोडशीम् ॥

किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः ।
विष्णोर्नामैव सम्प्रोक्तं ब्रह्मज्ञानैककारणम् ॥

व्याहरन्ति च नामानि ये शम्भोः परमात्मनः ।
रुद्राक्षमालयोपेतास्ते वै भागवतोत्तमाः ॥

हर! हरेति हरेति हरेति वा
भव! भवेति भवेति भवेति वा ।
शिव! शिवेति शिवेति शिवेति वा
भज मनः! शिवमेव निरन्तरम् ॥

स्मरन् यः स्मारयन् विष्णोर्नामान्युच्चारयन् हरेः ।
स नरः सहसंवासिजनैर्याति परं पदम् ॥

स्वपन् श्वसन् जपन् तिष्ठन् भुञ्जानः पर्यटन् पिबन् ।
यो वक्ति हरिनामानि तस्मै नित्यं नमो नमः ॥

गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्यासौ मृत उच्यते ॥

आयुषः क्षणलेशोऽपि न लभ्यः स्वर्णकोटिभिः ।
स वृथा नीयते येन स खलु ह्यात्मघातकः ॥

वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवा[1]सवैशसम् ॥

इति भक्तिपरा ये तु हरिनामपरायणाः ।
वर्णा वा वर्णबाह्या वा तेषां नित्यं नमो नमः ॥

कवले कवले कुर्वन् गोविन्दस्यानुकीर्तनम् ।
नित्योपवासी शुद्धात्मा सोऽन्नदोषैर्न लिप्यते ॥

---

[1] सवेशनम्—ग.

संसारसागरं तर्तुं य इच्छेत्पुरुषो भुवि ।
स भवेद्धरिनामैकसंसक्तश्च दृढव्रतः ॥

यः केशवेति यो ब्रूयात्केशवः केशवेति च ।
सद्यः संसारजं क्लेशं नाशयत्येव केशवः ॥

नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ।
तथापि नरके घोरे पतन्तीत्येतदद्भुतम् ॥

माधवाख्यमिदं नाम तरिः संसारसागरे ।
त्यक्त्वा मज्जन्ति वै मूढाः तदेतत्परमाद्भुतम् ॥

अनायासेन शुद्धात्मा गोविन्देति समुच्चरन् ।
तादृग्विधं त्यजन् मूढः प्रायश्चित्ते प्रवर्तते ॥

विष्णुं समर्चयन् नित्यं विष्णुमेव सदा जपन् ।
विष्णुं स्तुवन् कीर्तयंश्च विष्णुर्भवति नान्यथा ॥

मधुसूदननामेदं सम्प्राप्ते रिपुसङ्कटे ।
संस्मरन् मुच्यते सद्यो मानवो रिपुसङ्कटात् ॥

त्रिविक्रमेति त्रैलोक्यपावनं पापनाशनम् ।
पुनः पुनः स्मरन् जन्तुः सर्वकामानवाप्नुयात् ॥

दण्डाजिनधरं दिव्यं वामनं ब्रह्मचारिणम् ।
ध्यायन् नमस्यन् पूतात्मा संसारी ब्रह्मचर्यभाक् ॥

श्रीधरः श्रीकरः श्रीशः श्रीमानिति पुनः पुनः ।
जपेन्महादरिद्रोऽपि श्रियमाप्नोत्यसंशयः ॥

सर्वेन्द्रियाणां बाधासु हृषीकेशमनुस्मरन् ।
जितेन्द्रियः स्यात्पूतात्मा लभेदिन्द्रियपाटवम् ॥

पद्मनाभः पद्मनाभः पद्मनाभ इति ब्रुवन् ।
प्रातः सायं च मध्याह्ने ब्रह्म विन्दति शाश्वतम् ॥

महाबन्धनसम्प्राप्तो नियतात्मा पुनः पुनः ।
दामोदरं स्मरन् मर्त्यः सद्यो मुच्येत बन्धनात् ॥

सङ्कर्षणं सदा देवं स्मरन् संसारसागरम् ।
जानुदघ्नं तरत्येव नरो नैवात्र संशयः ॥

श्रीवासुदेवभक्तानां न भयं विद्यते क्वचित् ।
मुक्तिः करतले तेषामिति स्याच्छ्रुतिडिण्डिमः ॥

प्रद्युम्नमूर्तिं सम्पूज्य ध्यायन्नाम [1] प्रतिक्षणम् ।
प्रायेण दोषनिर्मुक्तः प्रयाति परमां गतिम् ॥

अनिरुद्धाभिधां मूर्तिमनायासेन पूजयन् ।
अनिरुद्धः स्वयं मर्त्यो भवतीत्येव शुश्रुम ॥

स्मरन् सुखमवाप्नोति पुरुषः पुरुषोत्तमम् ।
समभ्यर्च्य सतां मूर्तिं सम्पत्तिं सततं लभेत् ॥

अधोक्षजं सदा ध्यायन् सर्वबाधाविवर्जितः ।
साक्षादधोक्षजो लोके भवेन्मानवरूपधृक् ॥

नृसिंहेति नृसिंहेति नृसिंहेति सदा जपन् ।
पुमान्न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति ॥

अच्युताच्युत ! देवेशेत्यच्युतेत्यच्युतेति च ।
पुनः पुनर्ब्रुवाणोऽयं कदाचिन्न च्युतो भवेत् ॥

---

[1] प्रदक्षिणम्—ग.

जनार्दनेति जागर्ति मन्त्रोऽयं निगमोदितः ।
सकृदुच्चारणादेव सर्वाभीष्टफलप्रदः ॥

उपेन्द्रोपेन्द्र! देवेशेत्यब्रुवंस्ते सदा सुराः ।
देवासुराणां सङ्ग्रामे देवा विजयिनोऽभवन् ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥

कृष्ण! कृष्णेति कृष्णेति यो मां स्मरति नित्यशः ।
जलं हित्वा यथा पद्मं नरकादुद्धराम्यहम् ॥

केशवादीनि नामानि यः कुर्वन् कर्म चाखिलम् ।
आदावन्ते च मध्ये च वदन् फलमवाप्नुयात् ॥

स्मरन्ति मम नामानि ये त्यक्त्वा कर्म चाखिलम् ।
तेषां कर्माणि कुर्वन्ति ऋषयो भगवत्प्रियाः ॥

मन्नाम जपतां पुंसां कर्मलोपो भवेद्यदि ।
तत्कर्म वै प्रकुर्वन्ति तिस्रः कोट्यो महर्षयः ॥

मननश्रवणाभ्यां च हत्याकोटिनिवारणम् ।
कलौ सङ्कीर्तनादेव सर्वपापहरो हरिः ॥

श्रीराम! राम! रामेति ये वदन्त्यपि पापिनः ।
पापकोटिसहस्रेभ्यस्तानुद्धरति राघव ॥

तावद्विजृम्भते पापं ब्रह्महत्यापुरस्सरम् ।
यावत्कलौ रामनाम पुरुषैर्न हि कीर्तितम् ॥

तावद्यमभटाः क्रूराः सञ्चरिष्यन्ति निर्भयाः ।
यावच्छ्रीरामचन्द्रस्य नाम नोच्चरितं भुवि ॥

श्रीशब्दपूर्वं जयशब्दमध्यं जयद्वयेनापि पुनः प्रयुक्तम् ।
त्रिस्सप्तकृत्वो रघुनाथनाम जपुर्निहन्याद्द्विजकोटिहत्याम् ॥

श्रुतिस्मृतिपुराणेतिहासागमशतानि च ।
नार्हन्ति श्रीरामनामकीर्तनस्य कलामपि ॥

शृण्वन् सुभद्राणि रथाङ्गपाणे-
जन्मानि सर्वाणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ॥

एवंव्रतः स प्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥

ये मानवा विगतरागपरावरज्ञा
नारायणं सुरगुरुं सततं स्मरन्ति ।
ध्यानेन तेन हतकिल्बिषचेतनास्ते
मातुः पयोधररसं न पुनः पिबन्ति ॥

ये पापिनोऽपि शिशुपालसुयोधनाद्या
वैरानुबद्धमतयः परुषं वदन्तः ।
मुक्तिं गताः स्मरणमात्रविधूतपापाः
कः संशयः परमभागवतोत्तमानाम् ॥

यस्मिन् जनः प्राणवियोगकाले
क्षणं समावेश्य मनो विशुद्धम् ।
निर्हृत्य कर्माशयमाशु याति
परां गतिं ब्रह्ममयोऽर्कवर्णः ॥

बहुनात्र किमुक्तेन संक्षेपात्ते ब्रवीम्यहम् ।
कृष्णरामरता ये च ते वै भागवतोत्तमाः ॥

इत्यादिब्रह्मस्मृतयः—

सर्वेषां स्मृतिवाक्यानां भूयो भूयो विचारणात् ।
इदमेव सुनिष्पन्नं श्रीनारायणकीर्तनम् ॥ ४७ ॥

प्रकृतमनुसरामः पापमुत्सादयामो
भवभयमपहाय ब्रह्मभावं व्रजामः ।
परमपुरुषविष्णोर्दिव्यनाम्नां सहस्रं
सपदि विवृणुमः श्रीकृष्णपादौ नमामः ॥ ४८ ॥

यानि पुल्लिङ्गनामानि तानि विष्णुविशेषणम् ।
यानि क्लीबानि नामानि तानि ब्रह्मविशेषणम् ॥ ४९ ॥

यानि स्त्रीलिङ्गनामानि देवताया विशेषणम् ।
एवं हि नाम्नां सर्वेषां ग्रन्थे ज्ञेयोऽन्वयो बुधैः ॥ ५० ॥

ननु विष्ण्वादिशब्दानां पुनरुक्तिः प्रदृश्यते ।
इति चेद्वृत्तिभेदेन पुनरुक्तिर्न दोषभाक् ॥ ५१ ॥

श्रीपतिर्माधव इति वृत्त्यैक्ये शब्दभेदतः ।
पुनरुक्तिर्न दोषायेत्येवं शास्त्रविदो विदुः ॥ ५२ ॥

विष्णोर्नामसहस्रस्य वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् विश्वरूपधृक् ॥ ५३ ॥

अमृतांशूद्भवो भानुरिति बीजं प्रकीर्तितम् ।
देवकीनन्दनः स्रष्टेत्येवं शक्तिरुदाहृता ॥ ५४ ॥

शङ्खभृन्नन्दकी चक्रीत्येवं कीलकमुच्यते ।
अस्त्रं तत्र बुधैः प्रोक्तं शार्ङ्गधन्वा गदाधरः ॥ ५५ ॥

रथाङ्गपाणिरक्षोभ्य इति वै कवचं स्मृतम् ।
उद्भवः क्षोभणो देव इति मन्त्रो विमुच्यताम् ॥ ५६ ॥

ध्यानम्—

* क्षीरोदन्वत्प्रदेशे+मुकुन्दः ॥
भूः पादौ+विष्णुमाद्यं नतोऽस्मि ॥
विष्णुं भास्वत्+पद्मसंस्थं नमामि ॥
शान्ताकारं+विश्ववन्द्यं मुकुन्दम् ॥

विश्वमित्यादिसर्वप्रहरणायुध ओं नमः ।
इत्यन्तं यत्परिप्रोक्तस्तन्मालामन्त्र उच्यते ॥ ५७ ॥

तद्भक्ता विष्णुरेव स्याद्वेदव्यासावतारधृक् ।
तत्र बीजं च शक्तिं च कीलकं चास्त्रमेव च ॥ ५८ ॥

कवचं मुख्यमन्त्रश्च विष्णुर्नारायणः स्वयम् ।
यतो वाच्यो वाचकश्च सर्वं विष्णुमयं जगत् ॥ ५९ ॥

विष्णोर्नाम्नां सहस्रान्तर्यानि नामानि सन्ति वै ।
तत्तच्छक्तिप्रभेदेन तेषां तत्रोपयोगता ॥ ६० ॥

ध्यानं तत्रैव तस्योक्तं नानावासनया हरेः ।
मूर्तिभेदेन मुनिभिस्तस्य सर्वात्मकत्वतः ॥ ६१ ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसम्भाविना
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिस्तत्राप्युपोद्घाततो
मानार्थं श्रुतिसङ्ग्रहः स्मृतिगणः सम्पादितः सुन्दरः ॥६२॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा शुद्धोपोद्घातमञ्जरी ॥ ६३ ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्यप्रसूनाञ्जलौ
उपोद्घातमञ्जरी समाप्ता

---

* एतदारभ्य मुकुन्दमित्यन्तमेवमेव मातृकायां लिखितमुपलभ्यते । सम्पूर्णाश्चेमे श्लोका विष्णुं+नमामीतिश्लोकवर्जं विष्णुसहस्रनामस्तोत्रध्याने मुद्रिताः सन्ति ।

---

विश्वस्य कारणत्वाच्च तत्सृष्ट्वा तत्प्रवेशनात् ।
विशन्त्यस्मिंश्च भूतानि तेन **विश्वा**भिधो हरिः ॥१॥

विष्णोर्व्याप्त्यभिधायित्वाद्वेष्टि व्याप्नोति वा जगत् ।
प्रवेशनाद्विशेर्धातोर्विष्णुरित्युच्यते बुधैः ॥ २ ॥

वषट्क्रिया यदुद्देश्या यस्मिन् यज्ञेऽथवा हरौ ।
यज्ञो वा इति च श्रुत्या त्वं **वषट्कार** इत्यपि ॥ ३ ॥

जातं जनिष्यमाणं च जायमानं च यज्जगत् ।
तेषां प्रभुर्नियन्तृत्वाद्**भूतभव्यभवत्प्रभुः** ॥ ४ ॥

चतुराननरूपेण रजोगुणसमाश्रयात् ।
करोति यस्माद्भूतानि **भूतकृ**द्विष्णुरीरितः ॥ ५ ॥

सात्त्विकं गुणमास्थाय भूतानि च बिभर्ति यः ।
**भूतभृ**त्तेन निर्दिष्टो विष्णुः पोषयतीति वा ॥ ६ ॥

सर्वप्रपञ्चरूपेण **भावः** स्याद्भवतीति सः ।
सत्तात्मको वा भवनं **भाव** इत्यपि वै हरिः ॥ ७ ॥

आत्मेति सर्वभूतानां **भूतात्मा** स निगद्यते ।
प्रमाणमिति तत्रात्मान्तर्यामीति श्रुतिः परा ॥ ८ ॥

भावयन् सर्वभूतानि जनयन् स जनार्दनः ।
अथवा वर्धयंश्चैव ततोऽयं **भूतभावनः** ॥ ९ ॥

पूत आत्मेति यस्यासावथवा कर्मधारयः ।
केवलो निर्गुणश्रुत्या **पूतात्मा** विष्णुरुच्यते ॥ १० ॥

कार्यात्मकारणात्मभ्यां वैलक्षण्याद्विचक्षणैः ।
परमश्चाप्यसावात्मा **परमात्मे**ति गीयते ॥ ११ ॥

परा गतिस्तु मुक्तानां पुनरावृत्त्यसम्भवात् ।
विष्णुरेव बुधैः प्रोक्तो **मुक्तानां परमा गतिः** ॥ १२ ॥

नास्ति व्ययो [1]विनाशो वा विकारो वा न विद्यते ।
अजेरत्यादिकश्रुत्या विष्णुरेवा**व्ययो** यतः ॥ १३ ॥

पुरे शरीरे शेतेऽसौ पूरणात्सवनादपि ।
फलं पुरु सनोतीति ददाति **पुरुषः** स्मृतः ॥ १४ ॥

साक्षादव्यवधानेन निजबोधेन पश्यति ।
सर्वं जगद्धरिः साक्षात् **साक्षी** चेतेति च श्रुतेः ॥ १५ ॥

क्षेत्रं शरीरं जानाति **क्षेत्रज्ञो** विष्णुरित्यसौ ।
क्षेत्रज्ञं च स्मृतेरातोऽनुपसर्गे क ईरितः ॥ १६ ॥

अयमक्षरणाद्देवो विष्णुर**व्यय**संज्ञितः ।
[2]अश्नातिर्वा सरप्रत्ययान्तोऽप्य**क्षर** उच्यते ॥ १७ ॥

चित्तवृत्तिनिरोधाख्ययोगगम्यतयापि च ।
योगशक्तिस्वरूपत्वात्स **योगो** विष्णुरुच्यते ॥ १८ ॥

जानन्त्यथ लभन्ते वा योगं योगविदो बुधाः ।
तेषां **योगविदां नेता** योगक्षेमवहाद्धरिः ॥ १९ ॥

प्रधानं प्रकृतिर्माया पुरुषो जीव उच्यते ।
तयोर्नियामको विष्णुः **प्रधानपुरुषेश्वरः** ॥ २० ॥

---

[1] विनाशोऽस्ति–ग. [2] अश्नातेर्वा–ग.

नरस्य वै यद्वपुषि सिंहस्यावयवा अपि ।
नारसिंहवपुर्विष्णुर्विबुधैरिह वाच्यते ॥ २१ ॥

यां श्रयन्ते सर्वजनाः श्रीर्लक्ष्मीः शुभलक्षणा ।
सा वै वक्षसि यस्यास्ते स **श्रीमान्** विष्णुरुच्यते ॥ २२ ॥

अभिरूपा यस्य केशाः केशाद्वोन्येतिशासनात् ।
कश्चाश्चेशस्त्रयोऽवस्था यस्य विष्णोः स **केशवः** ॥ २३ ॥

पुरुषाणामुत्तमो वा पुरुषेभ्योऽयमुत्तमः ।
गीतापञ्चदशाध्याये प्रथितः **पुरुषोत्तमः** ॥ २४ ॥

सर्वस्य सर्वदा ज्ञानात्सर्वहेतुत्वसम्भवात् ।
**सर्वो** हरिर्व्यासवाक्यं [1]सर्वमेनं प्रचक्षते ॥ २५ ॥

शृणाति संहरत्यन्ते सर्वभूतानि केशवः ।
नमः शर्वाय चेत्यादिश्रुत्या **शर्वो**ऽयमच्युतः ॥ २६ ॥

निस्त्रैगुण्यतया शुद्धस्वरूपत्वाच्छिवत्वतः ।
स ब्रह्म स शिवश्रुत्या **शिवो** नारायणो मतः ॥ २७ ॥

स्थाणुशब्दः शिवे रूढस्तदभिन्नतया हरिः ।
स्थिरत्वादपि च **स्थाणुः** स्थाणवे ब्रह्मणे नमः ॥ २८ ॥

भूतादिकारणत्वाच्च **भूतादिर्**भगवान् हरिः ।
श्रुत्या चात्मन आकाशः सम्भूत इति कथ्यते ॥ २९ ॥

प्रलयेऽस्मिन् महाविष्णौ सर्वं विश्वं निधीयते ।
अव्ययोऽनश्वरत्वाच्च स विष्णुर्**निधिरव्ययः** ॥ ३० ॥

---

[1] सर्वमेतं—ग.

स्वच्छयास्य समीचीनं भवनं जन्म चे[1]त्यतः ।
**सम्भवः** स्यात्स्मृतिस्तत्र सम्भवामि युगे युगे ॥ ३१ ॥

फलानि भावयत्येष भोक्तॄणां चित्रकर्मणाम् ।
**भावनस्**तेन भगवान् विष्णुर्मुनिभिरुच्यते ॥ ३२ ॥

प्रपञ्चाधिष्ठानतया धारणाद्भरणादसौ ।
विष्णुरेव भवेद्**भर्ता** भर्ता भोक्तेति च स्मृतेः ॥ ३३ ॥

भवन्त्यपि च भूतानि प्रकर्षेण यतो हरेः ।
**प्रकृष्टं** जन्म [2]वास्येति स विष्णुः **प्रभवो** मतः ॥ ३४ ॥

सामर्थ्यातिशयाद्विष्णोस्सर्वेष्वपि च कर्मसु ।
विष्णुः **प्रभुः** श्रुतिस्तत्र विष्णोः कर्माणि [3]पश्यत ॥ ३५ ॥

निरुपाधिकमैश्वर्यं यस्यैवास्तीति निश्चयात् ।
[4]एष सर्वेश्वर इति श्रुत्या श्रीविष्णु**रीश्वरः** ॥ ३६ ॥

भवति स्वयमेवायं **स्वयम्भू**र्विष्णुरेव हि ।
स एव [5]माधवः शक्त्या स एव स्वयमुद्भवात् ॥ ३७ ॥

शं सुखं भक्तवात्सल्याद्भक्तानां भावयत्ययम् ।
**शम्भु**र्नमः शम्भवे चेति श्रुतिर्याजुषी परा ॥ ३८ ॥

आदित्यमण्डलान्तस्स्थपुरुषोऽयं हिरण्मयः ।
श्रुतेः स्मृतेश्च बाहुल्याद्विष्णु**रादित्य**नामवान् ॥ ३९ ॥

यत्पुष्करेणोपमिते ह्यक्षिणी यस्य सुन्दरे ।
तेन विष्णुः **पुष्कराक्षो** मुनिभिः परिगीयते ॥ ४० ॥

---

[1] त्युत–**क.** [2] चास्येति–**क.** [3] पश्यति–**ग.** [4] एष विश्वेश्वर इति श्रीमहाविष्णु–**ग.** [5] मानवं–**ग.** ?

महान् स्वनो वेदरूपो यस्य विष्णुर्महास्वनः ।
यदस्य महतो भूतेत्यादिश्रुतिरिहेष्यते ॥ ४१ ॥

आदिरुत्पत्तिरित्युक्ता निधनं तु विनाशनम् ।
न विद्यते स्वयं यस्य सोऽनादिनिधनो हरिः ॥ ४२ ॥

अनन्तादिस्वरूपेण सर्वं विश्वं बिभर्ति यत् ।
तस्माद्धाता हरिर्धाता विधाता परमा श्रुतिः ॥ ४३ ॥

कूर्मानन्तादिधातॄंश्च विशेषेण दधात्यतः ।
धाता धातॄणामिति च श्रुतेर्विष्णोर्विधातृता ॥ ४४ ॥

सामानाधिकरण्येन नामैकं सविशेषणम् ।
धातुर्विरिञ्चिरुत्कृष्ट इति वै धातुरुत्तमः ॥ ४५ ॥

प्रत्यक्षादिप्रमाणैर्यः प्रमातुं न च शक्यते ।
स्वयं प्रकाशरूपत्वादप्रमेयो बुधैः स्मृतः ॥ ४६ ॥

हृषीकाणामिन्द्रियाणामीशः क्षेत्रज्ञरूपभाक् ।
विष्णुर्हृषीकेश इति ख्यातः सर्वागमेषु च ॥ ४७ ॥

जगत्कारणकं पद्मं नाभौ यस्यैव विद्यते ।
पृषोदरादितः [1] साधुः पद्मनाभाभिधो हरिः ॥ ४८ ॥

अमराणां तु देवानां प्रभुः स्वामी नियामकः ।
अतः सर्वत्र विख्यातो विष्णुरेवामरप्रभुः ॥ ४९ ॥

विश्वं समस्तं यत्कर्म क्रिया स्याज्जगतः क्रियाः ।
यस्यासौ विश्वकर्मेति विश्वकर्मा दिशां श्रुतेः ॥ ५० ॥

मन्त्रशक्तिस्वरूपाद्वा मनोरेवावतारतः ।
मननाद्वा मनुर्विष्णुर्नान्योऽतोऽस्तीति च श्रुतेः ॥ ५१ ॥

---

साधु—ग.

संहारसमये सर्वभूतमात्रस्य वै [1] हरिः ।
तनूकरणतस्त्वष्टा त्वष्ट्रे स्वाहेति च श्रुतेः ॥ ५२ ॥

**स्थविष्ठो**ऽतिशयेनासौ स्थूलो विष्णुरतः स्मृतः ।
गुणो यणादिलोपश्च स्थूलदूरेतिसूत्रतः ॥ ५३ ॥

विष्णोर्वयःपरिमितेरभावात् **स्थविरस्**तथा ।
ध्रुवः स्थिरत्वात्तेनोक्तः श्रीविष्णुः **स्थविरो ध्रुवः** ॥ ५४ ॥

सर्वेन्द्रियैरग्रहणाद**ग्राह्य**स्तत्र च श्रुतिः ।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ ५५ ॥

शश्वत्सर्वेषु कालेषु भवतीति च **शाश्वतः** ।
याजुषी श्रुतिरत्रापि शाश्वतं शिवमच्युतम् ॥ ५६ ॥

कलौ च कृष्णवर्णत्वात् **कृष्णो** विष्णुस्तथा स्मृतिः ।
कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन! ॥ ५७ ॥

लोहिते अक्षिणी यस्य **लोहिताक्षः** स माधवः ।
मानं तत्रास्ति वृषभो लोहिताक्ष इति श्रुतिः ॥ ५८ ॥

प्रलयः सर्वभूतानां प्रकर्षेणापि तर्दनात् ।
धातोश्च तर्द हिंसायां तेन विष्णुः **प्रतर्दनः** ॥ ५९ ॥

ज्ञानैश्वर्यादिसम्पत्तिः प्रभूतिरिति कथ्यते ।
[2] तया प्रभूत्या सम्पन्नः **प्रभूतः** परमेश्वरः ॥ ६० ॥

ऊर्ध्वाधोमध्य[3]भावेन तिसृणां ककुभामपि ।
धामेति **त्रिककुब्धाम** विष्णुमेवं जगुर्बुधाः ॥ ६१ ॥

जगत्सर्वं पुनातीति **पवित्रं** विष्णुरेव हि ।
कर्तरीत्र[4]प्रत्ययः स्यात् पवित्राणामिति स्मृतिः ॥ ६२ ॥

---

[1] **हरेः–ग.** [2] तथा–**ग.** [3] भागेन–**ग.** [4] प्रत्ययात्–**क.**

शुभदः स्मृतिमात्रेण **मङ्गलं** हि **परं** हरिः ।
तथा विष्णुपुराणोक्तं ब्रह्म तन्मङ्गलं परम् ॥ ६३ ॥

विष्णुः सर्वनियन्तृत्वाद्**ईशान** इति कथ्यते ।
ईशानः सर्वविद्यानामित्यप्याह परा श्रुतिः ॥ ६४ ॥

प्राणं ददातीङ्गयति कः प्राण्यादिति च श्रुतेः ।
द्यति खण्डयति प्राणानिति वा **प्राणदो** हरिः ॥ ६५ ॥

यः प्राणितीत्यसौ विष्णुर्मुख्यप्राणो न संशयः ।
प्राणस्य प्राणमिति च श्रुतेः **प्राणाभिधो** हरिः ॥ ६६ ॥

वृद्धशब्दादिष्ठनि च ज्यादेशस्य विधानतः ।
**ज्येष्ठ** इत्युच्यते विष्णुर्यतो वृद्धतमो हि सः ॥ ६७ ॥

**श्रेष्ठो** विष्णुः प्रशस्यस्य श्र इति श्रविधानतः ।
प्रशस्यतम इत्युक्तस्तस्मै श्रेष्ठाय वै नमः ॥ ६८ ॥

सर्वप्रजापालकत्वाद्विष्णुरेव **प्रजापतिः** ।
प्रजापते नत्वदेतान्यन्यो विश्वेत्यपि श्रुतेः ॥ ६९ ॥

हिरण्मयाण्डान्तर्वर्तितया ब्रह्मात्मको हरिः ।
**हिरण्यगर्भः** समवर्तताग्र इति च श्रुतेः ॥ ७० ॥

भूर्भूमिर्यस्य वै गर्भे स **भूगर्भो** हरिः स्मृतः ।
विराड्रूपस्य ते विष्णोर्गर्भे भूमिरिति स्मृतेः ॥ ७१ ॥

मायाः श्रियो धवत्वाच्च बोध्यत्वान्मधुविद्यया ।
**माधवो** विष्णुरि[1]त्येवं माधवैकरता जगुः ॥ ७२ ॥

मधुनामानमसुरं कर्णमिश्रसमुद्भवम् ।
यतस्सूदितवान् विष्णुस्तेनायं **मधुसूदनः** ॥ ७३ ॥

[1] त्येव–ग.

ईश्वरः सर्वभूतानामिति श्रुतिरपि स्मृतिः ।
तस्माच्छ्रीविष्णुरेव स्यात्सर्वशक्ति[1]त **ईश्वरः** ॥ ७४ ॥

विक्रमः परमं शौर्यं क्रूरसंहारकारणम् ।
तद्योगाद्विक्रमी विष्णुस्तस्मै विक्रमिणे नमः ॥ ७५ ॥

धनुरस्यास्तीति **धन्वी** व्रीह्यादित्वादिनिर्भवेत् ।
विष्णुर्धन्वी स्मृतिस्तत्र रामः शस्त्रभृतामहम् ॥ ७६ ॥

मेधाऽप्रतिहतप्रज्ञा [2]बहुग्रन्थैकधारिणी ।
तद्वत्त्वादिति **मेधावी**त्यस्मायेति विनिर्भवेत् ॥ ७७ ॥

[3]विक्रमेताखिलं विश्वं विना वा गरुडेन हि ।
तेन **विक्रम**नामानं विष्णुं वेदविदो विदुः ॥ ७८ ॥

क्रमणात्क्रमहेतुत्वात् **क्रमो** विष्णुरिति स्मृतः ।
एवं मनोर्वचनतः क्रमो हरिरुरुक्रमः ॥ ७९ ॥

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इति च स्मृतेः ।
श्रुतेर्यस्मात्परं नेति प्रोक्तो विष्णु**रनुत्तमः** ॥ ८० ॥

दैत्यादिभिर्धर्षयितुं यतो नो शक्यते हरिः ।
[4]विष्णुमेव **दुराधर्ष**मिति प्राहुर्महर्षयः ॥ ८१ ॥

पत्राद्यल्पप्रदातृभ्यः फलं बहु ददाति वा ।
विष्णुः **कृतज्ञो** जानाति पुण्यापुण्यात्मकं कृतम् ॥ ८२ ॥

पुरुषाणां प्रयत्नो हि **कृति**र्हिंसाथवा हरिः ।
लक्ष्यः सर्वात्मकत्वेन तदाधारतयापि च ॥ ८३ ॥

प्रतिष्ठितः स्वे महिम्नीत्यतः श्रीविष्णु**रात्मवान्** ।
कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति च श्रुतिः ॥ ८४ ॥

---

[1] तयेश्वरः–ग. [2] बहुप्रज्ञैक–ग. [3] विक्रमाद–क. विक्रमेत्सकलं–ग. [4] विष्णुं दुराधर्षमतः स्फुटं प्रा–क.

सुराः शोभनदातारो देवास्तेषामपि प्रभुः ।
अतः **सुरेशः** श्रीविष्णुरिति ब्रह्मविदो विदुः ॥ ८५ ॥

शरणं भव भूतेशेत्यादिस्मृतिषु भाषितम् ।
भक्तानामार्तिहरणाद्रक्षणाच्छ**रणं** हरिः ॥ ८६ ॥

आनन्दं ब्रह्मणो विद्वानिति श्रुतिसहस्रशः ।
परमानन्दरूपत्वाच्छर्मशब्दाभिधो हरिः ॥ ८७ ॥

विश्वस्य कारणत्वाच्च **विश्वरेता** हरिः स्वयम् ।
तथाच भगवद्वाक्यमहं बीजप्रदः पिता ॥ ८८ ॥

यत्सकाशादुद्भवन्ति श्रीविष्णोः सकलाः प्रजाः ।
**प्रजाभव** इति प्रोक्तः सर्वशास्त्रार्थकोविदैः ॥ ८९ ॥

**अहः** प्रकाशरूपत्वाद्यद्वा कार्यात्मना स्मृतः ।
श्रुत्युक्तं ब्रह्मणः कार्यमहोरात्राश्च सर्वशः ॥ ९० ॥

संवत्सरादयः सर्वे कालोपाधय ईरिताः ।
संवत्सरोपधेयत्वाद्विष्णुः **संवत्सराभिधः** ॥ ९१ ॥

[1]शक्यो ग्रहीतुं मन्त्रज्ञैरमन्त्रज्ञैर्न गृह्यते ।
अतः सर्वेश्वरो विष्णुः सादृश्याद्**व्याल** उच्यते ॥ ९२ ॥

**प्रत्ययो** वस्तुमात्रस्य परिस्फुरति यो यतः ।
[2]विष्णुस्तदात्मना प्रज्ञानं ब्रह्मेति श्रुतेरपि ॥ ९३ ॥

सूर्यात्मना जगच्चक्षुर्जगत्साक्षितया हरिः ।
विश्वतश्चक्षुरिति च श्रुतेः स्यात् **सर्वदर्शनः** ॥ ९४ ॥

---

[1] शक्या–ग. [2] विष्णुः सदात्मना–ग.

अजो न जायते विष्णुर्न जातो न जनिष्यते।
इति श्रुतेर्न जातोऽहं न जायेऽहमिति स्मृतेः ॥ ९५ ॥

ईश्वराणां च सर्वेषामिन्द्रादीनामपीश्वरः।
एष सर्वेश्वर इति श्रुतेः सर्वेश्वरो हरिः ॥ ९६ ॥

सिद्धो निष्पन्नरूपत्वादवधूतोऽपि वा हरिः।
[1] सिद्धार्थी चावधूतात्मा इत्यप्यागमशासनात् ॥ ९७ ॥

संविद्रूपतया सर्ववस्तु[2]ष्वप्यनुवर्तनात्।
सर्वोत्कृष्टफलात्मत्वात् सिद्धिर्नारायणः स्वयम् ॥ ९८ ॥

अनादिरपि सर्वेषामादिरात्मेति च स्मृतः।
सर्वादिः सर्वभूतानां कारणत्वाद्धरिः स्वयम् ॥ ९९ ॥

सामर्थ्यात्स्वस्वरूपस्य विष्णुर्न च्यवतेऽच्युतः।
स्मर्यते श्रूयते चैव शाश्वतं शिवमच्युतम् ॥ १०० ॥

श्रीमद्विट्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे सञ्जातमाद्यं शतम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे।
समर्पिता [3] सुफलदा विशिष्टा विश्वमञ्जरी ॥

इति श्रीगम्भीरभारतीविरचितसहस्रनामविवृत्यपरपर्यायपद्यप्रसूनाञ्जलौ विश्वमञ्जरी समाप्ता।

---

[1] सिद्ध इत्यवधूताद्या इत्याद्यागम-क. [2] ष्वस्यानु-क. [3] सफल-ग.

## वृषाकपिमञ्जरी

---

कपिर्वराहः श्रेष्ठोऽथ वृषो धम इति [1]स्मृतेः ।
वृषत्वाच्च कपित्वाच्च विष्णुं प्राहुर्वृषाकपिम् ॥ १ ॥

इयानिति परिच्छेत्तुमयमात्मा न शक्यते ।
अतो विष्णुरमेयात्मा मुनिभिः परिकीर्तितः ॥ २ ॥

सर्वसम्बन्धराहित्यादसङ्गो हीति च श्रुतेः ।
हरिर्ज्ञानैकगम्यत्वात्सर्वयोगाविनिस्सृतः ॥ ३ ॥

वसन्त्यस्मिंश्च भूतानि भूतेष्वपि वसत्ययम् ।
विष्णुर्वसुरतः प्रोक्तो वसूनां पावकःस्मृतेः ॥ ४ ॥

प्राशस्त्यं वसुशब्देन लक्ष्यते धनवाचिना ।
प्रशस्तं च मनो यस्य स वै **वसुमना** हरिः ॥ ५ ॥

यतोऽवितथरूपत्वात् **सत्यो** विष्णुरसंशयः ।
सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिशासनात् ॥ ६ ॥

आत्मा मनः समो यस्य रागद्वेषाद्यभावतः ।
स **समात्मा** विष्णुरत्र सम आत्मेति च श्रुतेः ॥ ७ ॥

हरिः सर्वैरर्थजातैः परिच्छिन्नो हि **सम्मितः** ।
तैर्वायमपरिच्छिन्नः प्रोक्तो विष्णुर**सम्मितः** ॥ ८ ॥

सदा विकारशून्यत्वात् **समो**ऽयं साधुसम्मतः ।
**समो** विष्णुर्महालक्ष्म्या सह वर्तत इत्यपि ॥ ९ ॥

---

[1] स्थितः—क.

श्रुतः स्मृतः पूजितो वा [1]फलमद्धा प्रयच्छति ।
मोघं व्यर्थं न कुरुते यतोऽमोघाभिधो हरिः ॥ १० ॥

[2]हृदयस्थं पुण्डरीकमभिव्याप्योपलक्षितः ।
यत्पुण्डरीकश्रुत्या च पुण्डरीकाक्ष ईश्वरः ॥ ११ ॥

धर्मो वृषो विनिर्दिष्टस्तथा च वृषलक्षणम् ।
कर्म यस्येत्यसौ विष्णुर्वृषकर्मा प्रकीर्तितः ॥ १२ ॥

या विष्णोरवतारादावाकृतिः परिदृश्यते ।
धर्मरूपैव सा प्रोक्ता वृषाकृतिरतो हरिः ॥ १३ ॥

रुर्दुःखकारणं यद्धि तद्द्रावयति केशवः ।
रुजं राति ददातीति रुद्र इत्युच्यते ततः ॥ १४ ॥

बहूनि [3]हि शिरांस्यस्य स वै बहुशिरा हरिः ।
सहस्रशीर्षं देवं तमित्यादिश्रुतिशासनात् ॥ १५ ॥

अनायासेन यः सर्वं बिभर्ति भुवनत्रयम् ।
बभ्रुरित्युच्यते विष्णुर्भक्तैकभरणादपि ॥ १६ ॥

विश्वं जगत् परिप्रोक्तं योनिः कारणमुच्यते ।
विश्वस्य कारण[4]त्वाच्च विश्वयोनिरतो हरिः ॥ १७ ॥

शुचीनि शुभनामानि श्रवणीयानि यस्य [5]हि ।
अतः शुचिश्रवा नाम्ना विष्णुरुक्तो मनीषिभिः ॥ १८ ॥

मृतं मरणमित्युक्तं तद्यस्य न हि विद्यते ।
अतस्तममृतं प्राहुर्हरिं हरिपरायणाः ॥ १९ ॥

---

[1] फलमथ—क. [2] हृदयाब्जं—क. [3] च-क. [4] त्वाद्यो—क. [5] वै—क.

अचलत्वादयं स्थाणुः शाश्वतश्च चिरन्तनः ।
शाश्वतश्चाप्यसौ स्थाणुः **शाश्वतस्थाणु**[1]रुच्यते ॥ २० ॥

वरमारोहणं यस्य यत्सत्त्वेत्यादिकस्मृतेः ।
उत्तमौजा बहुव्रीहेर्**वरारोहो** हरिः स्मृतः ॥ २१ ॥

महद्यत्सृज्यविषयं ज्ञानरूपं तपोऽस्य वै ।
**महातपा** विष्णुरिति यस्य ज्ञानमयं तपः ॥ २२ ॥

व्याप्तत्वात्कारणत्वेन [2]स सर्वं गच्छतीत्यसौ ।
सर्वत्रगमचिन्त्यं चेत्येवं स्मृत्या[3]ऽपि **सर्वगः** ॥ २३ ॥

भातीति भानुर्निर्दिष्टस्सर्वं वेत्तीति सर्ववित् ।
सर्वविच्चाप्यसौ भानुः **सर्वविद्भानु**रुच्यते ॥ २४ ॥

**विष्वक्सेनं** हरिं प्राहुर्विष्वगञ्चति वै यतः ।
दैत्यसेनाः पलायन्ते यद्रणोद्योगमात्रतः ॥ २५ ॥

विष्णुरेव जनानर्दयति सर्वान् हिनस्ति च ।
अर्द्यते याच्यते मुक्तिर्जनैरिति **जनार्दनः** ॥ २६ ॥

वेदो नारायण इति स्मृत्या **वेदो** हरिः स्वयम् ।
ज्ञानदीपेन वै भक्तानथ वेदयतीति च ॥ २७ ॥

यथावद्वेदवेदार्थान् वेत्त्यसौ विन्दतेऽथवा ।
स्मृतेर्वेदान्तकृद्वेदेत्यथ विष्णुर्हि **वेदवित्** ॥ २८ ॥

ज्ञानाद्यविकलोऽव्यङ्गो व्यक्तिर्वास्य न विद्यते ।
अव्यक्तोऽयमिति स्मृत्याप्य**व्यङ्गो** विष्णुरुच्यते ॥ २९ ॥

---

रच्युतः—क.  [2] सत्वरं—क.  [3] च—क.

अङ्गभूता हि यस्यैते वेदा वेदाङ्ग एव सः ।
श्रीविष्णुरिह चत्वारि शृङ्गेत्यादिषु वर्ण्यते ॥ ३० ॥

भाष्यकारादिरूपेण कालेष्ववतरन्नपि ।
मानाच्चैव पुराणोक्ताद्विष्णुर्वेदविदीश्वरः ॥ ३१ ॥

स्यात्कविः सर्वदृङ्नान्योऽतोऽस्ति द्रष्टेति च श्रुतेः ।
कविर्मनीषीतिमन्त्रवर्णाच्च कविरुच्यते ॥ ३२ ॥

लोकानध्यक्षयति यो लोकाध्यक्षो जनार्दनः ।
सर्वेषामपि लोकानामुपद्रष्टा प्रधानतः ॥ ३३ ॥

सुराणां लोकपालानां देवानामधिकारिणाम् ।
आधिपत्ये प्रयोक्तृत्वात् सुराध्यक्षो हि केशवः ॥ ३४ ॥

धर्माधर्मौ हि लोकानां यः साक्षादीक्षते स्वयम् ।
अनुरूपफलं दातुं धर्माध्यक्षस्ततो हरिः ॥ ३५ ॥

कृतः स्यात्कार्यरूपेण ह्यकृतः कारणात्मना ।
अतः कृताकृतो विष्णुरुभयात्मतया स्थितः ॥ ३६ ॥

ब्रह्मा दक्षः प्राणि[1]कालौ स्थित्यां विष्णुर्मनुश्च तौ ।
लये रुद्रोऽन्तकस्तौ च चतुरात्मा क्रमाद्धरिः ॥ ३७ ॥

व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः ।
इति स्मृतेश्चतुर्व्यूहो विष्णुः सङ्कर्षणादिभिः ॥ ३८ ॥

दंष्ट्राश्चतस्रो यस्येति बहुव्रीहिरिहेष्यते ।
तेन विष्णुश्चतुर्दंष्ट्रो नरसिंहाख्यविग्रहः ॥ ३९ ॥

---

[1] कर्ता—क. १

चत्वारोऽस्य भुजा यस्मात्तस्माद्विष्णुश्चतुर्भुजः ।
चतुर्भुजं शङ्खगदाद्युद्यायुधमिति स्मृतिः ॥ ४० ॥

विष्णुर्भ्राजिष्णुरुत्कृष्टप्रकाशैकस्वरूपतः ।
तस्य भासा सर्वमिदं विभातीति श्रुतेरपि ॥ ४१ ॥

प्रकृतिर्याति चिद्रूपाद्भोज्यत्वाद्भोजनात्मिका ।
तदभिन्नतया विष्णुर्भोजनाभिध उच्यते ॥ ४२ ॥

पूर्वोक्तां प्रकृतिं मायां यो भुङ्क्ते पुरुषः परः ।
मायावी स च वै विष्णुर्भोक्ता प्रोक्तो मनीषिभिः ॥ ४३ ॥

हिरण्याक्षाद्याचरितं [1]सहसादौ तपःफलम् ।
सहतेऽभिभवत्येषः सहिष्णुर्विष्णुरीरितः ॥ ४४ ॥

हिरण्यगर्भरूपेण जगदादौ हि जायते ।
प्रादुर्भवति वै यस्माच्छ्रीविष्णुर्जगदादिजः ॥ ४५ ॥

अघं न विद्यते यस्य श्रीविष्णुरनघः स्मृतः ।
श्रुत्यापहतपाप्मेति स्मर्यते चानघो हरिः ॥ ४६ ॥

ऐश्वर्यज्ञानवैराग्यादिभिः शुभगुणैर्हरिः ।
यतो विजयते विश्वमित्यसौ विजयाभिधः ॥ ४७ ॥

यतोऽयं सर्वभूतानि विष्णुर्जेता स्वभावतः ।
तत्राप्यस्ति वसु स्पार्हमुत जेतेति च श्रुतिः ॥ ४८ ॥

विश्वरूपतया योनिरूपत्वात्कर्मधारयात् ।
विश्वयोनिरयं विष्णु[2]र्विष्णुर्योनिमिति श्रुतिः ॥ ४९ ॥

शरीरेषु च सर्वेषां प्राणिनां च पुनः पुनः ।
विष्णुः क्षेत्रज्ञरूपेण वसतीति पुनर्वसुः ॥ ५० ॥

---

[1] सहनादौ—क.   [2] र्विष्णुं योनि—क.

इन्द्रस्योप समीपे तु गतवानित्ययं हरिः ।
अनुजत्वेन [1] तस्मात्तमुपेन्द्रमिति वै जगुः ॥ ५१ ॥

मध्ये वामनमासीनं विश्वे देवा उपासते ।
मन्त्रवर्णाद्वामनोऽयं यद्रूपाद्बलिबन्धकृत् ॥ ५२ ॥

हरिवेशं [2] तथा विश्वरूपं दर्शितवान् हरिः ।
अतः प्रांशुरयं विष्णुः क्रममाणो जगत्त्रयम् ॥ ५३ ॥

मोघं व्यर्थं न भवति [3] हरेर्यद्यच्च चेष्टितम् ।
तस्मादमोघः श्रीविष्णुरुच्यते ब्रह्मविज्जनैः ॥ ५४ ॥

स्मरतां स्तुवतां [4] नित्यं पुंसां वै पावनत्वतः ।
मन्त्रवर्णेऽप्येवमेव महान शुचिरतः शुचिः ॥ ५५ ॥

देवः [5] सारात्मवत्त्वाच्च महाभ्युदयवत्तया ।
बलप्रकर्षशालित्वात्प्रोक्तः श्रीविष्णुरूर्जितः ॥ ५६ ॥

स्वभावसिद्धैरमलैर्ज्ञानैश्वर्यादिभिर्गुणैः ।
अतीत्येन्द्रं स्थितो विष्णुरतीन्द्रः कथ्यते बुधैः ॥ ५७ ॥

सर्वेषामपि संहारात्सङ्ग्रहो विष्णुरुच्यते ।
सम्यग्गृह्णाति वै देवो निजभक्ताननुग्रहात् ॥ ५८ ॥

ब्रह्मा त्वचित्तसर्गाणां वासिष्ठद्वैतखण्डनात् ।
सृज्यरूपतया सर्गहेतुत्वात्सर्ग ईश्वरः ॥ ५९ ॥

एकरूपेण जन्मादिरहितत्वेन हेतुना ।
धृत आत्मा स्वयं येन धृतात्मा विष्णुरुच्यते ॥ ६० ॥

---

[1] तस्मात्त्वामु—**क.** [2] कथा—**क.** [3] हन्तुर्यस्य च—**क.** [4] पुंसां विष्णुर्वै पावनत्वतः—**ग.** [5] सारात्मवत्त्वाच्च—**ग.**

स्वेषु स्वेष्वधिकारेषु यथायोगतया प्रजाः ।
विष्णुर्नियमयत्येव तस्मात्स्यान्नियमो हरिः ॥ ६१ ॥

विष्णुरेव बुधैः प्रोक्तो ह्यन्तःसंयमनाद्यमः ।
गीतासु भगवत्प्रोक्तं यमः संयमतामहम् ॥ ६२ ॥

विष्णुर्हि वेदनार्हत्वाद्वेद्यो निश्रेयसार्थिभिः ।
तत्रात्मा वार इत्यादिश्रुत्या वेद्यत्वदर्शनात् ॥ ६३ ॥

**वैद्यो** हि सर्वविद्यानां वेदितृत्वाद्धरिः स्वयम् ।
भक्तसंसाररोगस्य ज्ञानभेषजदानतः ॥ ६४ ॥

सदाविर्भावरूपत्वात्**सदायोगी** जनार्दनः ।
यत्र योगीश्वरः कृष्ण इत्यादिस्मृतिशासनात् ॥ ६५ ॥

धर्मत्राणायावतरन् भूभारोत्तारणाय च ।
विष्णुर्महासुरभटान् वीरान् हन्तीति **वीरहा** ॥ ६६ ॥

माशब्देन हरेर्विद्या तदुपास्यतया धवः ।
स्वामीति हरिवंशोक्तं तेन **माधव** उच्यते ॥ ६७ ॥

यथा मधु परां प्रीतिं चोत्पादयति जन्तुषु ।
तथायं **मधुरि**त्युक्तो मधुविद्याविशारदैः ॥ ६८ ॥

अतिक्रान्तेन्द्रियत्वाच्च सोऽयं विष्णु**रतीन्द्रियः** ।
श्रुतेरशब्दमस्पर्शं ब्रह्म निर्विषयं श्रुतेः ॥ ६९ ॥

महामाया[1]कारितया **महामायो** हरिः स्वयम् ।
तथा च भगवद्वाक्यं मम माया दुरत्यया ॥ ७० ॥

यतो हि जगदुत्पत्तिस्थितिनाशार्थमच्युतः ।
महोद्योगपरस्तस्मान्**महोत्साहो** महेश्वरः ॥ ७१ ॥

---

[1] कारतया—**क.**

बलवत्त्वेन विख्याता [1]यतो बलिबलादयः ।
बलवत्त्वाच्च बलिनां निग्रहाच्च **महाबलः** ॥ ७२ ॥

बुद्धिमन्त इति ख्याता लोके ब्रह्मादयः सुराः ।
बुद्धिमत्त्वाद्बुद्धिमतां **महाबुद्धि**रिहाच्युतः ॥ ७३ ॥

महद्धि वीर्यं यस्यासौ **महावीर्यो** हरिः स्मृतः ।
विष्णोर्वीर्याणि शंसन्ति विष्णोर्नुकमिति श्रुतेः ॥ ७४ ॥

महती शक्तिरस्यासौ **महाशक्ति**र्जनार्दनः ।
परास्य शक्तिर्विविधेत्यादिश्रुतिरिति [2]स्मृतिः ॥ ७५ ॥

महती द्युतिरस्यास्ति **महाद्युति**रतो हरिः ।
ज्योतिषामपि तज्ज्योतिः स्वयंज्योतिरिति श्रुतेः ॥ ७६ ॥

इदं तदिति निर्देष्टुं वपुर्यस्य न शक्यते ।
स्वसंवेद्यतयान्यस्मै ह्य**निर्देश्यवपु**र्हरिः ॥ ७७ ॥

सर्वभोगैकनिलयो या श्रीरैश्वर्यलक्षणा ।
समग्रा यस्य स **श्रीमान्** विष्णुर्मुनिभि[3]रीडितः ॥ ७८ ॥

सर्वप्राणिभिरस्यात्मबुद्धिर्दुर्घटकारिणी ।
अमेयोऽसाव**मेयात्मा** विष्णुः प्रोक्तो मनीषिभिः ॥ ७९ ॥

महान्तमद्रिं धृतवान् मन्दरं कमठाकृतिः ।
गोवर्धनं च गोपालस्तेन विष्णुर्**महाद्रिधृत्** ॥ ८० ॥

इष्वासो हि महान् विष्णोरिषुक्षेपो धनुर्भवेत् ।
अतः प्रोक्तो महाविष्णुर्**महेष्वासो** महर्षिभिः ॥ ८१ ॥

पूर्वमेकार्णवे जाते सम्प्लुता स्याद्वसुन्धरा ।
तां दधार महाविष्णुर्**महीभर्ते**ति कथ्यते ॥ ८२ ॥

---

[1] ये ते बलि—क. [2] स्मृतः—क. [3] रीरितः—ग.

यस्योरसि श्रीर्वसति **श्रीनिवासः** स केशवः ।
श्रियो निवासो यस्योर इति भागवतस्मृतेः ॥ ८३ ॥

सतां श्रीहरिभक्तानां वैदिकानां यतो [1]गतिः ।
**सतां गतिः** श्रूयते च सा काष्ठा सा परा गतिः ॥ ८४ ॥

प्रादुर्भावेऽषु सर्वेषु न केनापि निरुध्यते ।
अतोऽ**निरुद्धः** श्रीविष्णुरुक्तः शास्त्रार्थकोविदैः ॥ ८५ ॥

ब्रह्मानन्दाम्बुधेर्बिन्दुनानन्दे[2]न सुरेषु च ।
इति स्मृत्या **सुरानन्दो** ह्यानन्दयति [3]यत्सुरान् ॥ ८६ ॥

गां विन्दति महीं यस्माद्वाणीं विन्दयतेऽपि च ।
शप्रत्ययान्तो **गोविन्दो** गवादिष्विति सूत्रतः ॥ ८७ ॥

चतुर्विधां गां पराद्यां ये विन्दन्ति मनीषिणः ।
गोविन्दस्तु परिप्रोक्तः श्रीविष्णु**र्गोविदां पतिः** ॥ ८८ ॥

तेजस्वित्वाद्यतो विष्णुस्सर्वतेजस्विनामपि ।
तेजस्तेजस्विनां स्मृत्या **मरीचि**र्जगदीश्वरः ॥ ८९ ॥

स्वाधिकारात्प्रमाद्यन्तीः प्रजा दमयतीति च ।
वैवस्वतादिरूपेण हरि**र्दमन** उच्यते ॥ ९० ॥

पृषोदरादितः साधु**र्हंसो** हन्त्यखिलं [4]लये ।
हंसः शुचिषदित्यादिश्रुते**र्हंसो** जनार्दनः ॥ ९१ ॥

हरिः शोभनपर्णत्वात्**सुपर्णः** परिकीर्तितः ।
द्वा सुपर्णेतिनिगमाद्विश्वगो हीति च श्रुतेः ॥ ९२ ॥

भुजेन गच्छतां सर्वप्राणिनां परमेश्वरः ।
उत्तमत्वात्पतिः प्रोक्तः श्रीविष्णु**र्भुजगोत्तमः** ॥ ९३ ॥

---

[1] हरिः—ग. [2] नाद्य-ग. [3] तत्सुरान्—ग. [4] भयम्—क.

हिरण्यमिव कल्याणं नाभिरस्यैव विद्यते ।
जगुर्हिरण्यनाभं तं हरिं हरिपरायणाः ॥ ९४ ॥

नरनारायणौ भूत्वा योऽयं बदरिकाश्रमे ।
सु शोभनं तपस्तेपे सुतपास्तेन वै हरिः ॥ ९५ ॥

नाभिः पद्ममिवात्यर्थं [1]वर्तुला यस्य वर्तते ।
स पद्मनाभः श्रीविष्णुस्तस्मै श्रीविष्णवे नमः ॥ ९६ ॥

प्रजानामपि सर्वासां पतिः स्वाम्यथवापि वा ।
अतः प्रजापतिर्विष्णुः श्रूयते त्वं प्रजापतिः ॥ ९७ ॥

मृत्युर्विनाशो नास्त्यस्य हेतुर्वास्य न विद्यते ।
तस्मादमृत्युरित्युक्तो विष्णुरेव महात्मभिः ॥ ९८ ॥

स्वाभाविकेन भावेन सर्वप्राणिकृताकृतम् ।
पश्यतीति च गोविन्दः सर्वदृक् सद्भिरीरितः ॥ ९९ ॥

सिंहो यस्माद्धिनस्तीति प्रजा धर्मविवर्जिताः ।
साधुः पृषोदरादित्वात्सिंहाय हरये नमः ॥ १०० ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे जातं द्वितीयं शतम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा वृषाकप्याख्यमञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्यप्रसूनाञ्जलौ वृषाकपिमञ्जरी समाप्ता ।

---

[1] सदृशं—क.

# सन्धातृमञ्जरी

---

सन्धत्ते सर्वपुरुषान् तत्तत्कर्मफलेष्वपि ।
**सन्धाता** तेन निर्दिष्टो विष्णुस्तस्मै नमो नमः ॥ १ ॥

सन्धातेति प्रकरणात्संन्धिः फलमिहोच्यते ।
तस्य तत्फलभोक्तृत्वात्**सन्धिमान्** विष्णुरुच्यते ॥ २ ॥

चेष्टाशून्यतया ब्रह्म **स्थिरो** नित्यैकरूपतः ।
यथा दीपो निवातस्थो नेङ्गते सोपमास्मृतेः ॥ ३ ॥

अजत्यसौ गच्छतीति धातोरज गताविति ।
सर्वचेष्टाश्रयत्वाच्च ततो विष्णु**रजा**भिधः ॥ ४ ॥

दैत्यैश्च दानवैस्सोढुं मर्षितुं यन्न शक्यते ।
ततो **दुर्मर्षणो** विष्णुस्तस्मै श्रीविष्णवे नमः ॥ ५ ॥

सर्वेषां शासनं कुर्वन् श्रुतिस्मृतिनिजाज्ञया ।
शास्ता जनानामित्यादिश्रुतेश्**शास्ता** हरिः स्वयम् ॥ ६ ॥

विशेषेण श्रुतेस्सत्यज्ञानानन्दादिलक्षणः ।
आत्मा यतो विष्णुरेव **विश्रुतात्मा** निगद्यते ॥ ७ ॥

सुराणामिति देवानामरयो दानवादयः ।
अयं तेषां निहन्तृत्वाद्विष्णुरेव **सुरारिहा** ॥ ८ ॥

विद्यानामुपदेष्टृत्वात्सर्वेषां जनकत्वतः ।
गुरुरेव परं ब्रह्मस्मृत्या विष्णु**र्गुरुः** स्मृतः ॥ ९ ॥

ब्रह्मादीन् ब्रह्मविद्योपदेष्टृनुपदिशत्यतः ।
विष्णुर्गुरुतमस्तस्माद्यो ब्रह्माणमिति श्रुतेः ॥ १० ॥

ज्योतिः परं ब्रह्म धामस्मृत्या धामाभिधो हरिः ।
नारायणपरो ज्योतिरेवं भागवती श्रुतिः ॥ ११ ॥

सच्च त्यच्चाभवत्तेषामेष सत्यमिति श्रुतेः ।
सत्यो विष्णुर्विनिर्दिष्टः सत्याय हरये नमः ॥ १२ ॥

यतो ह्यवितथो यस्य परिप्रोक्तः पराक्रमः ।
अतो मुनिभिराख्यातो हरिः सत्यपराक्रमः ॥ १३ ॥

निमिषः केशवो योगनिद्रानेत्रनिमीलनात् ।
निद्रामुवाह जठरीकृत इत्यादिका स्मृतिः ॥ १४ ॥

मत्स्यावतारग्रहणात्सदाऽनिमिषरूपवान् ।
नित्यप्रबुद्ध[1]रूपाद्वा तस्मादनिमिषो हरिः ॥ १५ ॥

स्रजं हि वैजयन्त्याख्यां भूततन्मात्ररूपिणीम् ।
बिभर्तीति हरिः स्रग्वी तं वन्दे परमेश्वरम् ॥ १६ ॥

पतिर्वाचो हि विद्याया धीरुदाराखिलात्मिका ।
यस्यासावेकनामेदं वाचस्पतिरुदारधीः ॥ १७ ॥

अग्रं पदं प्रकृष्टं यन्मुमुक्षुं नयतीत्यसौ ।
विष्णुरेवाग्रणीः प्रोक्तः स नः पायादपायतः ॥ १८ ॥

भूतग्रामस्य नेतृ[2]त्वात्स्वरग्रामस्य वा हरिः ।
ग्रामणीः प्रणवात्मत्वाद्यत्र स्वरलयोद्भवौ ॥ १९ ॥

सर्वातिशयरूपा श्रीः कान्तिरस्यैव विद्यते ।
तस्माच्छ्रीमान् हरिरिति विश्वविख्यातिमागतः ॥ २० ॥

---

[1] रूपत्वात्त-क.    [2] त्वादीरग्राम-ग.

[1] त्र्य्यर्थानुग्राहकोऽपि तर्को न्यायस्तदात्मकः ।
न्यायोऽयं नीतिरूपत्वात्तदाधारतया हरिः ॥ २१ ॥

यन्निर्माय जगद्यन्त्रं तस्य निर्वाहकत्वतः ।
नेतासौ तेन मुनिभिस्सर्वशास्त्रेषु संस्तुतः ॥ २२ ॥

भूतानि चेष्टयति यत्सर्वाणि श्वसनात्मना ।
विष्णुः समीरणस्तस्मात्सम्यगीरयतीत्यसौ ॥ २३ ॥

श्रुतानि तु सहस्राणि मूर्ध्नामस्य जगद्गुरोः ।
सहस्रमूर्धा तेनोक्तः श्रीविष्णुर्वैष्णवोत्तमैः ॥२४ ॥

विश्वस्यात्मा हि विश्वात्मा विष्णुरुक्तो मनीषिभिः ।
मन्त्रवर्णे ब्राह्मणेऽपि विश्वात्मानं परायणम् ॥ २५ ॥

यस्याक्षीणि सहस्राणि तथाक्षाणीन्द्रियाणि च ।
असौ विष्णुः सहस्राक्षः सहस्राक्ष इति श्रुतेः ॥ २६ ॥

पादा यस्य सहस्राणीत्यसौ विष्णुः सहस्रपात् ।
श्रुतयस्तत्र दृश्यन्ते विश्वतस्पात् सहस्रपात् ॥ २७ ॥

संसारचक्रमावर्तयितुं शीलं यतो हरेः ।
तस्मादावर्तनो विष्णुराचार्यैः समुदाहृतः ॥ २८ ॥

लीलामनुजरूपस्य जन्मसंसारबन्धनात् ।
आत्मा निवृत्तो यस्यासौ निवृत्तात्मा जनार्दनः ॥ २९ ॥

अविद्ययाऽऽच्छादिकया संवृतत्वाच्च संवृतः ।
स्वयं प्रकाशरूपोऽपि विष्णुर्मेघेन सूर्यवत् ॥ ३० ॥

रुद्रकालादिरूपाभिर्विष्णुर्निजविभूतिभिः ।
सम्यक् प्रमर्दयति यत्तस्मात्स्यात्सम्प्रमर्दनः ॥ ३१ ॥

[1] प्रमाणानुग्राहको हि तर्को—ग.

स विष्णुः सूर्यरूपेण सम्यगह्नां प्रवर्तनात् ।
शास्त्रकृद्भिः स विज्ञेयो ह्यहस्संवर्तको हरिः ॥ ३२ ॥

स विष्णुः सर्ववहनाद्वह्निरित्युच्यते बुधैः ।
अग्निः पूर्वेभिर्ऋषिभिरित्यादिश्रुतिशासनात् ॥ ३३ ॥

धातोर्लाऽऽदान इति कः स्यादालोप एव च ।
निपूर्वश्चाप्यनादानादनिलोऽयं जनार्दनः ॥ ३४ ॥

दिग्गजादिस्वरूपाभिर्विष्णुर्निजविभूतिभिः ।
धरणीं धरतीत्येष माधवो **धरणीधरः** ॥ ३५ ॥

प्रसादः शोभनो यस्य ह्यपचारवतामपि ।
कंसादीनां मोक्षवहात्सुप्रसादो जनार्दनः ॥ ३६ ॥

रजस्तमोभ्यां रहित आत्मान्तःकरणं हरेः ।
अतो विष्णुः **प्रसन्नात्मा** नमस्तस्मै परात्मने ॥ ३७ ॥

सर्वाधिष्ठानरूपत्वाद्विश्वं धृष्णाति **विश्वधृक्** ।
ञि धृषा प्रागल्भ्य इति धातोः क्विपि कृते तथा ॥ ३८ ॥

विश्वं भुङ्क्ते यो भुनक्ति तथा पालयतीत्यसौ ।
**विश्वभुक्तेन** निर्दिष्टस्तस्मै विश्वभुजे नमः ॥ ३९ ॥

हिरण्यगर्भादिरूपाद्विविधो भवतीति च ।
विष्णु**र्विभु**रिति प्रोक्तो नित्यं विभुमिति श्रुतेः ॥ ४० ॥

अयमप्यवतारादौ साधून् [1]पूजयति प्रभुः ।
सत्करोतीति **सत्कर्ता** तस्मै श्रीहरये नमः ॥ ४१ ॥

ब्रह्मादिभिः पूज्यतेऽयं सर्वलोकैकपूजितैः ।
अतस्तं **सत्कृतं** प्राहुर्विष्णुं विष्णुपरायणाः ॥ ४२ ॥

---

[1] भाजयति—ग.

साध्यभेदानुपादानात्साध्यमात्रस्य साधकः ।
न्यायवर्तितया वायं साधुस्साधुभि[1]रुच्यते ॥ ४३ ॥

जहात्यविदुषो भक्तान्नयतीति परं पदम् ।
जहुर्जनांश्च प्रलये ह्रुतेऽपनयतीति वा ॥ ४४ ॥

**नारायणो**ऽयनत्वाच्च तत्त्वानां नरजन्मनाम् ।
स्मृतौ निरुक्तिबाहुल्याद्व्याप्य नारायणश्रुतेः ॥ ४५ ॥

नयति प्रापयति यः पदं विष्णुर्नरः स्मृतः ।
नयतीति **नरः** प्रोक्तः परमात्मेति च स्मृतेः ॥ ४६ ॥

यस्मिन्विष्णावसङ्ख्येया नामरूपादयो ह्यसौ ।
**असङ्ख्ये**[2]यस्तेन हरिर्वयं नरहरिं नुमः ॥ ४७ ॥

निजस्वरूपं यस्यात्मा ह्यप्रमेयो यतो हरेः ।
श्रीविष्णुर**प्रमेयात्मा** सर्वलोकैकपूजितः ॥ ४८ ॥

विष्णु**र्विशिष्टो** विश्वस्मात्परमातिशयत्वतः ।
विश्वतः परमं नित्यमिति श्रुतिरपीष्यते ॥ ४९ ॥

शिष्टं च शासनं शिक्षां करोतीत्यपि **शिष्टकृत्** ।
शिष्टान् वा कुरुते पालयतीत्यपि च **शिष्टकृत्** ॥ ५० ॥

शुचीन् स्वस्मरणाद्धन्यान् कुरुते वा निरञ्जनः ।
**शुचि**र्विष्णुः स्मृतिस्तत्र सबाह्याभ्यन्तरः शुचिः ॥ ५१ ॥

निर्वृत्तश्चार्थ्यमानोऽर्थः सिद्धो यस्य स वै हरिः ।
**सिद्धार्थ** इति सम्प्रोक्तः सत्यकाम इति श्रुतेः ॥ ५२ ॥

सिद्धो निष्पन्नरूपो हि सङ्कल्पोऽस्येति केशवः ।
**सिद्धसङ्कल्प** इत्युक्तः सत्यसङ्कल्पताश्रुतेः ॥ ५३ ॥

---

[1] रिष्यते—ग.  [2] यस्तु हरि—क ?

स्वाधिकारानुरूपेण कर्तृभ्योऽखिलकर्मणाम् ।
सिद्धिं फलं ददातीति **सिद्धिदः** परमेश्वरः ॥ ५४ ॥

सर्वासामपि सिद्धीनां साधकत्वादयं हरिः ।
स **सिद्धिसाधनो** नाम [1]सर्ववेदेषु विश्रुतः ॥ ५५ ॥

वृषाह इति पुण्याहो वैष्णवो याग उच्यते ।
द्वादशाहादिरस्यास्ति **वृषाही** भगवान् हरिः ॥ ५६ ॥

यो हरिर्निजभक्तेभ्यः सर्वकामान् प्रवर्षति ।
वृषभोऽयं तथा [2]चोक्तो **वृषभः** कामवर्षणात् ॥ ५७ ॥

**विष्णु**र्विचङ्क्रमणतो **विष्णु**र्विक्रमणात्स्मृतेः ।
तथा विचक्रमाणस्त्रेधोरुगाय इति श्रुतेः ॥ ५८ ॥

वृषरूपाणि सोपानपर्वाण्याहुर्मनीषिणः ।
परं धामारुरुक्षोस्तु **वृषपर्वा** हरिः स्वयम् ॥ ५९ ॥

यस्योदरे वृषो धर्मो वर्षत्यस्योदरं प्रजाः ।
द्वेधा निरुक्तिरत्रोक्ता विष्णुस्तेन **वृषोदरः** ॥ ६० ॥

स्वेनोत्पन्नं जगत्सर्वं स्वयं वर्धयतीश्वरः ।
**वर्धन**स्तेन निर्दिष्टो विष्णुर्विश्वैकपालकः ॥ ६१ ॥

सर्वप्रपञ्चरूपेण स्वयमेव हि वर्धते ।
बुधैस्तेन परिप्रोक्तो **वर्धमाना**भिधो हरिः ॥ ६२ ॥

स इत्थं वर्धमानोऽपि विविच्य पृथगासितः ।
अत एव **विविक्तो**ऽयं विष्णुस्तस्मै नमो नमः ॥ ६३ ॥

विष्णौ सागररूपेण सर्वागमगुरौ हरौ ।
श्रुतयोऽस्मिन्निधीयन्त इत्यसौ **श्रुतिसागरः** ॥ ६४ ॥

---

[1] सर्वदेवेषु–**ग.** [2] भोक्तुर्वृषभः–**क.**

सु शोभना भुजा यस्य जगद्रक्षाकरा हरेः ।
तेनासौ **सुभुजो** नाम सर्वलोकेषु विश्रुतः ॥ ६५ ॥

ध्यायन्मुमुक्षुभिर्विष्णुर्दुःखेन हृदि धार्यते ।
केनापि शक्यते धारयितुं नैवेति **दुर्धरः** ॥ ६६ ॥

यतो हि वाग्ब्रह्ममयी श्रीमद्विष्णोर्विनिस्सृता ।
तेनायं कथ्यते **वाग्मी** तस्य वन्दे पदाम्बुजम् ॥ ६७ ॥

महांश्चासावपीन्द्रश्च **महेन्द्रो** विष्णुरीश्वरः ।
वन्दे तस्य पदद्वन्द्वं द्वन्द्वबुद्ध्यपनुत्तये ॥ ६८ ॥

धनं वसु ददातीति **वसुदः** परमेश्वरः ।
विख्यातश्च तथान्नादो वसुदान इति श्रुतेः ॥ ६९ ॥

भक्तेभ्यो भक्तवात्सल्याद्दीयमानं च यद्वसु ।
तस्यापि तत्स्वरूपत्वाद्वासुदेवो **वसुर्मतः** ॥ ७० ॥

**नैकरूपो** हरिर्यस्य चैकं रूपं न विद्यते ।
ज्योतींषि विष्णुर्भुवनानीत्यादिस्मृतिशासनात् ॥ ७१ ॥

निखिलं भूतलं बिभ्रद्बृऽहच्च परमं महत् ।
वाराहरूपमस्येति **बृहद्रूपो** जनार्दनः ॥ ७२ ॥

शिपयः पशवस्तेषु **शिपिविष्टः** प्रवेशवान् ।
विष्णुरेव श्रुतिस्तत्र पशुषु प्रतितिष्ठति ॥ ७३ ॥

तस्य भासेति च श्रुत्या जगत्स्थावरजङ्गमम् ।
प्रकाशयति तेनासौ विष्णुः प्रोक्तः **प्रकाशनः** ॥ ७४ ॥

तेजः शौर्यं प्राणबलमोजो ज्ञानात्मिकां द्युतिम् ।
**ओजस्तेजोद्युतिधरः** स्वयं धारयतीत्यसौ ॥ ७५ ॥

प्रकाशः स्यात्प्रकर्षेण दीप्यमानतया हरेः ।
आत्मा स्वरूपं यस्यासौ **प्रकाशात्मा** जनार्दनः ॥ ७६ ॥

दिवाकरादिरूपाभिर्विष्णुर्निजविभूतिभिः ।
विश्वं प्रतापयति च तेन प्रोक्तः **प्रतापनः** ॥ ७७ ॥

वैराग्यधर्मज्ञानादिगुणैः कल्याणलक्षणैः ।
**ऋद्धो**ऽयं समुपेतत्वाद्विश्वात्मा विष्णुरुच्यते ॥ ७८ ॥

[1]यतः स्पष्टमुदात्तं हि प्रोक्तमोङ्कारलक्षणम् ।
अक्षरं यस्य तेनासौ विष्णुः **स्पष्टाक्षरो** मतः ॥ ७९ ॥

श्रीविष्णुरेव **मन्त्रश्च** ऋग्यजुस्सामलक्षणः ।
यच्च तन्मन्त्रबोध्यत्वात्तस्मै मन्त्रात्मने नमः ॥ ८० ॥

तापत्रयार्कसन्तप्तप्राणिनां परमेश्वरः ।
चन्द्रांशुरिव **चन्द्रांशुः** परमाह्लादकारणात् ॥ ८१ ॥

भास्करद्युतिसाधर्म्याच्छ्रीविष्णुर्**भास्करद्युतिः** ।
तथा च स्मर्यते भूरिकोटिसूर्यसमप्रभः ॥ ८२ ॥

**अमृतांशूद्भवो** विष्णुर्मथ्यमाने पयोनिधौ ।
अमृतांशोश्चन्द्रमसो यस्मादेव समुद्भवः ॥ ८३ ॥

भातीति **भानुः** श्रीविष्णुः सर्वभक्तैकरक्षकः ।
तमेव भान्तमनुभाति सर्वमिति च श्रुतेः ॥ ८४ ॥

बिन्दुः शश इवाङ्कोऽस्य **शशबिन्दुर्**हरिः स्वयम् ।
एकस्य चन्द्ररूपत्वात्सोमो भूत्वेति च स्मृतेः ॥ ८५ ॥

ब्रह्मरुद्रेन्द्रमुख्यास्तु सुराः प्रोक्ता मनीषिभिः ।
तेषामपि च देवानामीश्वरत्वात्**सुरेश्वरः** ॥ ८६ ॥

---

[1] यच्च—क.

श्रीविष्णुर्भवरोगैकभेषजत्वादिहौषधम् ।
भवौषधाच्छ्रोत्रमनोभिरामादिति च स्मृतेः ॥ ८७ ॥

समुच्चारणहेतुत्वादसम्भेदकरत्वतः ।
श्रीविष्णुर्जगतस्सेतुरेष सेतुरिति श्रुतेः ॥ ८८ ॥

सत्या अवितथा धर्मा ज्ञानाद्याः शोभना गुणाः ।
पराक्रमश्च यस्यासौ **सत्यधर्मपराक्रमः** ॥ ८९ ॥

भूतभव्यभवन्तो ये भूतग्रामाश्च तैरसौ ।
**भूतभव्यभवन्नाथो** नाथ्यते याच्यते हरिः ॥ ९० ॥

विष्णुरेव बुधैः प्रोक्तः **पवनः** [1]पावनत्वतः ।
गीतासु भगवद्वाक्यं पवनः पवतामिति ॥ ९१ ॥

**पावनो**ऽपि च विष्णुः स्याद्यतः पावयतीत्यसौ ।
तथा हि याजुषी भीषाऽस्माद्वातः पवतेश्रुतिः ॥ ९२ ॥

[2]अनात्प्राणात्मकतया लातीत्य**नल** ईश्वरः ।
न विद्यतेऽलं पर्याप्तं यस्य चे**त्यनलो** हरिः ॥ ९३ ॥

मुमुक्षूणां स्वभक्तानां जन्मसंसारकारकान् ।
कामान् हन्तीत्यसौ विष्णुः **कामहा** परिकीर्तितः ॥ ९४ ॥

**कामकृ**त्कामकरणात्प्रद्युम्नः काम उच्यते ।
तस्यापि जनकत्वाच्च कामकृत्परमेश्वरः ॥ ९५ ॥

अभिरूपतमः **कान्तः** स्यादासेचनकं हरिः ।
तन्नमामि रमाकान्तमैकान्तिकसुखप्रदम् ॥ ९६ ॥

---

[1] पठ्यते स्वतः—क.  [2] अनाव—ग.

तुरीयपुरुषार्थैककाङ्क्षिभिः काम्यते यतः ।
कामः प्रतिग्रहीतेति श्रुतेः कामाभिधो हरिः ॥ ९७ ॥

ददाति कामान् भक्तेभ्यः प्रकर्षेण स्वयं हरिः ।
श्रूयते सोऽश्नुते सर्वान् कामान् कामप्रदस्ततः ॥ ९८ ॥

प्रकर्षेणाथ भगवान् समर्थः परमोऽथवा ।
प्रभुस्तस्मै नृहरये विष्णवे प्रभवे नमः ॥ ९९ ॥

हरिर्युगानामारम्भकरणाद्वा युगादिकृत् ।
युगादिकालभेदस्य कर्तृत्वाद्वा युगादिकृत् ॥ १०० ॥

श्रीमद्विट्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे जातं तृतीयं शतम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा सन्धात्रभिधमञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्यप्रसूनाञ्जलौ
सन्धातृमञ्जरी समाप्ता ।

---

## युगावर्तमञ्जरी

कालात्मना कृतादीनि युगान्यपि पुनः पुनः ।
आवर्तयति तेनासौ **युगावर्तो** हरिः स्वयम् ॥ १ ॥

**नैकमायो** हरिर्यस्मादेका माया न विद्यते ।
इन्द्रो मायाभिः पुरुरूप ईयत इति श्रुतेः ॥ २ ॥

यस्य वै ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
अत्ता चराचरेत्यत्र स्फुटः श्रुत्या **महाशनः** ॥ ३ ॥

बुद्धीन्द्रियाणां सर्वेषामगम्योऽदृश्य ईश्वरः ।
अदृश्योऽयमनन्तोऽयमचिन्त्योऽयमिति स्मृतेः ॥ ४ ॥

व्यक्तं स्वरूपमस्येति **व्यक्तरूपो** जनार्दनः ।
राघवाद्यवतारेषु योगिनां हृदयेऽथवा ॥ ५ ॥

सुराणां दुःखनाशार्थं श्रीविष्णुर्भक्तवत्सलः ।
सुरारीणां सहस्राणि जयतीति **सहस्रजित्** ॥ ६ ॥

माधवोऽनन्तभूतानि ह्यक्षक्रीडादिकर्मसु ।
अचिन्त्यशक्तिमत्त्वाच्च जयतीत्यप्य**नन्तजित्** ॥ ७ ॥

परमानन्दरूपत्वात्प्रियत्वेनाथवा हरिः ।
यज्ञेन पूजितास्त्व**विष्टो** विष्णुस्सर्वेष्टदैवतम् ॥ ८ ॥

विशेषेण स्वयं विष्णुः सर्वान्तर्यामिता यतः ।
**विशिष्टस्तेन** निर्दिष्टो विष्णुः शिष्टतरैर्बुधैः ॥ ९ ॥

विष्णुरिष्टो वसिष्ठादिमुनीनां प्रयतात्मनाम् ।
शिष्टा इष्टाश्च यस्यासौ **शिष्टेष्टो** जगदीश्वरः ॥ १० ॥

शिखण्डोऽपि कलापः स्याद्यदलङ्करणं हरेः ।
**शिखण्डी**ति स विख्यातो गोपवेषधरो हरिः ॥ ११ ॥

यतो नह्यति भूतानि मायावी निजमायया ।
**नहुष**स्तेन गोविन्दः स्याद्धातुर्णह बन्धने ॥ १२ ॥

**वृषो** हि वर्षणाद्धर्मफलानां भगवान् हरिः ।
तथा च भारते प्रोक्तं विद्धि मां [1]वृषमच्युतम् ॥ १३ ॥

क्रोधात्सम्मोहिता भक्ताः प्रणश्यन्ति यतस्ततः ।
तेषां क्रोधं निहन्तीति **क्रोधहा** पुरुषोत्तमः ॥ १४ ॥

क्रोधं कुर्वन्तीति दैत्याः सत्सु क्रोधकृतो मताः ।
श्रीविष्णुः **क्रोधकृत्कर्ता** तेषां वै [2]छेदकत्वतः ॥ १५ ॥

आलम्बनत्वाद्विश्वेषां [3]विश्वे वा बाहवोऽस्य च ।
श्रूयते विश्वतोबाहुर्**विश्वबाहु**रतो हरिः ॥ १६ ॥

सर्वपूजैकयोग्यत्वान्महीं पूज्यां धरत्यसौ ।
धरित्रीं शेषरूपेण धत्ते विष्णुर्**महीधरः** ॥ १७ ॥

यस्य षड्भावविकृतिर्नास्तीति हरिर**च्युतः** ।
श्रुतिशासनमप्यत्र शाश्वतं शिवमच्युतम् ॥ १८ ॥

जगदुत्पत्तिनाशादिकर्मभिः परमेश्वरः ।
लोके वेदेषु विख्यातः **प्रथित**स्तेन कीर्तितः ॥ १९ ॥

सूत्रात्मना प्रजास्सर्वा विष्णुः प्राणयतीत्यतः ।
**प्राणः** स एव सम्प्रोक्तः प्राणो वाऽहमिति श्रुतेः ॥ २० ॥

---

[1] वृषमित्युत—**ग.** [2] भेदकत्वतः—**क.** [3] विश्वतो वा—**क.**

प्राणो बलमिति प्रोक्तस्तद्ददाति द्यतीति वा ।
सुराणामसुराणां च **प्राणद**स्तेन केशवः ॥ २१ ॥

वासवस्यानुजो जातो ह्यदित्यां कश्यपाद्धरिः ।
मुनिभिस्तेन निर्दिष्टः श्रीविष्णुर्**वासवानुजः** ॥ २२ ॥

आपो यत्र निधीयन्ते सोऽयं विष्णुर**पां निधिः** ।
तथा च भगवद्वाक्यं सरसामस्मि सागरः ॥ २३ ॥

अधितिष्ठन्ति भूतानि यदुपादानकारणम् ।
**अधिष्ठान**मतो विष्णुर्मत्स्थानीत्यादिकस्मृतेः ॥ २४ ॥

प्रयच्छन्नधिकारिभ्यः फलं कर्मानुरूपकम् ।
न प्रमाद्यति वै यस्माद**प्रमत्तो** हरिर्भवेत् ॥ २५ ॥

प्रतिव्यक्ति स्थितत्वाच्च विष्टभ्य जगतां त्रयम् ।
स्वे माहिम्नि स्थितत्वाद्वा श्रीविष्णुः स्यात्**प्रतिष्ठितः** ॥ २६ ॥

गच्छ[1]त्यनिलरूपेण शोषयत्यनलात्मना ।
गतिशोषणयोः स्कन्दिस्तेन **स्कन्दा**भिधो हरिः ॥ २७ ॥

स्कन्दं धर्मपथं धारयति **स्कन्दधरो** यतः ।
स्कन्दं विशाखं येनाधिपत्ये स्थापयतीति च ॥ २८ ॥

धुरं वहति य**द्धुर्यो** भूतजन्मादिलक्षणम् ।
तथा च पाणिनस्सूत्रं धुरो यड्ढकाविति ॥ २९ ॥

वरान् ददात्यभिमतान् भक्तेभ्यो **वरदः** स्मृतः ।
व्यासोक्तिरपि तत्रैवं सुरासुरवरप्रदः ॥ ३० ॥

वायुं प्राणं वाहयति लोके प्रापयतीत्यसौ ।
**वायुवाहन** इत्युक्तस्तं वन्दे वायुवाहनम् ॥ ३१ ॥

---

[1] त्यमृतरूपेण—ग.

वासुः सर्वत्र वसति देवो दीव्यति सर्वदा ।
वासुदेव इति ख्यात उभयोः कर्मधारयात् ॥ ३२ ॥

बृहद्भानुर्बृहन्तोऽस्य भानवश्चन्द्रसूर्यगाः ।
[1] याजुषे च बृहद्भानो शवसेत्यादि पठ्यते ॥ ३३ ॥

आदिः स्यात् कारणं देवो द्योतनादिगुणैर्युतः ।
कर्मधारयतः प्राहुरादिदेवं नमामि तम् ॥ ३४ ॥

पुराणां दारणाद्देवः शत्रूणां स पुरन्दरः ।
तथा वाचंयमपुरन्दराविति निपातनात् ॥ ३५ ॥

अशोकः [2] किल शोकादिषडूर्मिपरिवर्जितः ।
श्रुतिस्तथा च गगनं विशोक इति तं नुमः ॥ ३६ ॥

संसारसागराद्भक्तान् यतस्तारयतीत्यसौ ।
तारणः स परिप्रोक्तः सद्भिः शास्त्रार्थकोविदैः ॥ ३७ ॥

गर्भजन्मजरामृत्युलक्षणाद्दुस्तराद्भयात् ।
तारयंस्तार इत्युक्तो नमस्ताराय वै श्रुतेः ॥ ३८ ॥

शूरसंज्ञो भवेद्विष्णुः सर्वविक्रमवत्तया ।
श्रुतिर्भगवती तत्र [3] महीशूराय विष्णवे ॥ ३९ ॥

विष्णुः कृष्णावतारेऽस्मिन् शौरिः शूरकुलोद्भवः ।
बाह्वादिभ्यश्चेतिसूत्रादिञतः शौरये नमः ॥ ४० ॥

जनानामपि जन्तूनामीश्वरो हि जनेश्वरः ।
तस्मै देवाय महते गोपालाय नमो नमः ॥ ४१ ॥

न हि स्वस्मिन् प्रातिकूल्यं स्वयमाचरति कश्चित् ।
आत्मत्वेन हि सर्वेषामनुकूलस्ततो हरिः ॥ ४२ ॥

---

[1] याजुषी—क. [2] खलु—ग. [3] महेशूराय—च.

श्रीहरेः शतमावर्ताः प्रादुर्भा[1]वा हि यस्य सः ।
आवर्तनमिहावर्तः **शतावर्तो** बुधैर्मतः ॥ ४३ ॥

पद्मं करेऽस्त्यतः **पद्मी** तथा भागवतस्मृतिः ।
शङ्खचक्रगदापद्मवनमालादिभूषितम् ॥ ४४ ॥

यस्येक्षणे पद्मनिभे स च **पद्मनिभेक्षणः** ।
कृष्णं कमलपत्राक्षमिति व्याससुतोऽब्रवीत् ॥ ४५ ॥

पद्मस्य नाभिसंस्थत्वात्**पद्मनाभो**ऽत्र लक्षणा ।
ध्यायेद्विष्णुं सरसिजासनसंस्थमिति श्रुतेः ॥ ४६ ॥

अरविन्दोपमाक्षत्वादस्य श्रीपरमात्मनः ।
**अरविन्दाक्ष** इत्युक्तो बहुव्रीहिषजन्ततः ॥ ४७ ॥

मध्ये हृदयगर्भस्य य उपास्योऽत्र योगिभिः ।
गर्भरूपं यतः पद्मं **पद्मगर्भ**स्ततो हरिः ॥ ४८ ॥

स्वमायया स्वयं देहान् बिभर्तीति **शरीरभृत्** ।
यद्वा प्राणान्नरूपाभ्यां प्राणिनां देहपोषणात् ॥ ४९ ॥

**महर्द्धि**र्महती ऋद्धिर्विभूतिर्यस्य सोऽच्युतः ।
नान्तोऽस्ति मम दिव्यानां विभूतीनामिति स्मृतेः ॥ ५० ॥

**ऋद्धः** प्रपञ्चरूपेण विवृतः परमेश्वरः ।
ऋद्धाय तस्मै हरये गोपालाय नमो नमः ॥ ५१ ॥

वृद्धः पुरातनो ह्यात्मा स्वरूपं यस्य सोऽव्ययः ।
**वृद्धात्मा** तेन गोपालो नमो वृद्धाय च श्रुतेः ॥ ५२ ॥

अक्षाणि च महान्त्यस्य महान्त्यक्षीणि यस्य वा ।
**महाक्षः** स च विज्ञेयो महाक्षाय नमो नमः ॥ ५३ ॥

[1] वादि य–**ग.**

गरुडांशो ध्वजो यस्य स प्रोक्तो **गरुडध्वजः**।
तथा प्रसिद्धिः कोशेषु गोविन्दो गरुडध्वजः ॥ ५४ ॥

तुलोपमानं नो यस्य सोऽ**तुलः** श्रुतिसंस्तुतः ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इति च स्मृतेः ॥ ५५ ॥

शरीरे शीर्यमाणेऽस्मिन् प्रत्यगात्मतया हरिः ।
भातीति **शरभो** विष्णुः शरीरं च शराभिधम् ॥ ५६ ॥

बिभेत्यस्मात्सर्वमिति जगदन्तकरो यतः ।
ततो **भीम** इति प्रोक्तो नमो भीमाय च श्रुतेः ॥ ५७ ॥

सृष्टिस्थित्यन्तसमयान् जानातीति जनार्दनः ।
**समयज्ञः** स मां देवः समये समयेऽवतु ॥ ५८ ॥

यज्ञेषु च हविर्भागं हरतीति **हविर्हरिः**।
अहं हि सर्वयज्ञानां भोक्तेति भगवद्वचः ॥ ५९ ॥

सर्वैश्च लक्षणैर्मान्यैर्यज्ज्ञानं तद्धि लक्षणम् ।
**सर्वलक्षणलक्षण्यस्**तत्र साधुतयोदितः ॥ ६० ॥

**लक्ष्मीवान्** यस्य हृदये लक्ष्मीरस्तीति नित्यशः ।
श्रियो निवासो यस्योर इति भागवतोदितः ॥ ६१ ॥

**समितिञ्जय** इत्युक्तो यस्माद्युद्धं जयत्यसौ ।
जेतारमग्निं पृतनासु सासहिमिति श्रुतेः ॥ ६२ ॥

विगतस्तु क्षरो नाशो यस्यासौ **विक्षरो** मतः।
याजुषे पठ्यते चैव अक्षरं परमं पदम् ॥ ६३ ॥

**रोहितो** मत्स्यरूपां वा रोहितां मूर्तिमावहन्।
रोहिताय स्थपतय इति श्रुत्यापि रोहितः ॥ ६४ ॥

**ार्गो** विष्णुर्यतश्चैनं मार्गयन्ति मुनीश्वराः।
ान्यः पन्था इति स्पष्टं श्रूयते श्रुतिमूर्धनि ॥ ६५॥

निमित्तं चाप्युपादानं कारणं स भवेद्यतः।
ततो **हेतु**स्स्मृतिस्तत्र नमो विश्वैकहेतवे ॥ ६६ ॥

ाम यस्योदरे बद्धं मात्रा **दामोदर**स्ततः।
मृतिश्च दामोदरतां स ययौ दामबन्धनात् ॥ ६७ ॥

क्तापराधं क्षमते सहतेऽभिभवत्यरीन्।
ति वा स **सहो** विष्णुस्तं नमामि सहाभिधम् ॥ ६८ ॥

हीं च गिरिरूपेण धरतीति **महीधरः**।
नानि विष्णुर्गिरयो दिशश्चेति पराशरः॥ ६९ ॥

हान् भागो भाग्यमस्य यद्गुणैश्वर्यलक्षणम्।
नोक्तोऽसौ **महाभागो** महाभाग्यप्रदोऽस्तु नः ॥ ७० ॥

गो जव इति प्रोक्तः स यस्यास्तीति **वेगवान्**।
अनेजदेकं मनसो जवीय इति च श्रुतेः ॥ ७१ ॥

हारसमये विश्वमश्नातीत्य**मिताशनः**।
विष्णुस्तथा स्मर्यते च भुङ्क्ते विश्वभुगव्ययः ॥ ७२ ॥

**उद्भवो** ह्युद्गतो यस्माद्भवः संसारलक्षणः।
पञ्चोत्पत्त्युपादानकारणादुद्भवोऽथवा ॥ ७३ ॥

**क्षोभणः** क्षोभयन् सर्गे प्रकृतिं पुरुषं तथा।
द्योतयामास भगवान् सर्गकाल इति श्रुतेः ॥ ७४ ॥

सर्गादिभिः क्रीडति यो दैत्यादीन् विजिगीषते।
ततो **देव**स्स्मृतिस्तत्र द्योतनाद्देव उच्यते ॥ ७५॥

श्रीर्विभूतिर्जगद्रूपा धृता यस्योदरान्तरे[1]।
स **श्रीगर्भो**ऽवतान्नित्यमस्मान् श्रियमिहार्पयन्॥ ७६ ॥

**परमेश्वर** इत्युक्तः परमश्चायमीश्वरः।
तथा च गीता भूतेषु तिष्ठन्तं परमेश्वरम्॥ ७७ ॥

समस्तजगदुत्पत्तौ स साधकतमत्वतः।
**करणं** चेति निर्दिष्टः स पायात्करणाभिधः॥ ७८ ॥

उपादानमभिन्नं सन्निमित्तमिति **कारणम्**।
सत्कारणायाखिलकारणायेति स्मृतेरपि॥ ७९ ॥

**कर्ता** [2]हरिः स्वतन्त्रत्वात्क्रियायां विश्वनिर्मितौ।
तथा विश्वस्य कर्तेति प्रसिद्धाखिलसंहिता॥ ८० ॥

भुवनानि विचित्राणि कृतवान्नित्यसौ हरिः।
**विकर्ता** मुनिभिः प्रोक्तो विकर्त्रे विष्णवे नमः॥ ८१ ॥

यस्य स्वरूपं सामर्थ्यं चेष्टितं वा जगद्गुरोः।
ज्ञातुं न शक्यत इति **गहनः** स बुधोदितः॥ ८२ ॥

[3]गूहते संवृणोतीति स्वरूपादीनि मायया।
तेन विष्णुर्**गुहः** प्रोक्तो गुह्यं गूढमिति श्रुतेः॥ ८३ ॥

सच्चिन्मात्रस्वरूपत्वाद्**व्यवसायो** हरिः स्वयम्।
जयोऽस्मि व्यवसायोऽस्मीत्येवं श्रीभगवद्वचः॥ ८४ ॥

**व्यवस्थानो** जातिवर्णान् विभज्य प्रकरोति यत्।
ल्युः कर्तरि भवेत्कृत्यल्युटो बहुलमित्यतः॥ ८५ ॥

यत्रैव सर्वभूतानां संस्थितिः प्रलयात्मिका।
**संस्थानः** स्यात्समीचीनं स्थानमस्येति वा पुनः॥ ८६ ॥

---

[1] दराम्बरे–ग.   [2] पतिः–ग.   [3] गृह्णाति–ग ?

ध्रुवादिनिजभक्तानां स्थानं कर्मानुरूपतः ।
ददातीति कृपाम्भोधिः **स्थानदो** लोकविश्रुतः ॥ ८७ ॥

अविनाशितया विष्णुर्ध्रुवोऽयमिति गीयते ।
तथा ध्रुवोऽसि ध्रुवोऽहं सजातेष्विति च श्रुतेः ॥ ८८ ॥

ऋद्धिरस्य परोत्कृष्टा विभूतिः परमात्मनः ।
असौ **परर्द्धिरि**त्युक्तो नमस्तस्मै परर्द्धये ॥ ८९ ॥

अनन्याधीनसंसिद्धः संविदात्मतया हरिः ।
परमश्चाप्यसौ स्पष्टः **परमस्पष्ट** उच्यते ॥ ९० ॥

परमानन्दरूपत्वात्तुष्टोऽयं स्यात्त्रिविक्रमः ।
तस्य संस्करणात्तुष्टस्तस्मै तुष्टात्मने नमः ॥ ९१ ॥

सर्वसम्पूर्णरूपत्वात्पुष्टः स्यात्परमेश्वरः ।
याजुषी श्रूयते चैवं रयिमान् पुष्टिमानपि ॥ ९२ ॥

यदीक्षणं मुमुक्षूणां तथा [1]भोगार्थिनामपि ।
मोक्षभोगप्रदत्वाच्च विष्णुरेव **शुभेक्षणः** ॥ ९३ ॥

रमन्ते योगिनो यस्मिन् स **रामो** राघवोऽथवा ।
रमन्ते योगिनो यत्रेत्यादिब्रह्म[2]पुराणतः ॥ ९४ ॥

समस्तप्राणिनां यस्मिन् विरामो ह्यवसानता ।
स **विरामो** भवेद्विष्णुस्तत्र भूतलयः स्मृतः ॥ ९५ ॥

विगतं च रजो यस्य पापं विषयसेवनम् ।
**विरजस्तत्परं** ब्रह्म तस्मै विरजसे नमः ॥ ९६ ॥

यं विदित्वाऽमृतत्वाय कल्पन्ते हि मुमुक्षवः ।
स एव पन्था **मार्गः** स्यान्नान्यः पन्था इति श्रुतेः ॥ ९७ ॥

---

[1] भोगर्द्धिनामपि–ग.  [2] पुराणवाक्–ग.

मार्गेण सम्यग्ज्ञानेन परमात्मतया ह्यसौ ।
जीवः सन्नीयते यस्मान्नेय इत्युच्यते बुधैः ॥ ९८ ॥

नयतीति नयो नेता भक्तान् प्रापयिता [1] पदम् ।
नयस्तेन विनिर्दिष्टस्तन्नतोऽस्मि नयं हरिम् ॥ ९९ ॥

अनयोऽयं बुधैरुक्तो नयो नेता न विद्यते ।
तस्यासाविति तं देवमनयं प्रणतोऽस्म्यहम् ॥ १०० ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे जातं तुरीयं शतम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा युगावर्ताख्यमञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्मप्रसूनाञ्जलौ युगावर्तमञ्जरी समाप्ता ।

---

[1] परम्—क.

# वीरमञ्जरी

**वीरो** विक्रमशालित्वाद्वीरत्वं श्रीहरेः स्फुटम् ।
श्रूयते हरिवंशादौ कंससाल्वादिमर्दनात् ॥ १ ॥

विष्णुः **शक्तिमतां श्रेष्ठः** शक्तिमन्तः शिवादयः ।
तेषां श्रेष्ठो यतश्चायं तेभ्योऽभ्यधिकशक्तिमान् ॥ २ ॥

भूतानां धारणाद्धर्मस्तथा भारतभारती ।
नमो धर्माय महते धर्मो धारयति प्रजाः ॥ ३ ॥

मन्वत्रिप्रमुखाः सर्वे सर्वधर्मविदो मताः ।
तेषामप्युत्तमत्वाच्च विष्णु**र्धर्मविदुत्तमः** ॥ ४ ॥

मिथो विश्लिष्टभूतानां सृष्ट्यादौ कुण्ठयन् गतिम् ।
संश्लेषयति **वैकुण्ठः** शान्तिपर्वोदितं स्फुटम् ॥ ५ ॥

**पुरुषः** खलु सर्वस्मात्पुरा सादनतोऽथवा ।
पुरा शयनतोपीत्थं व्युत्पत्तिः श्रुति[1]बोधिता ॥ ६ ॥

विष्णुः क्षेत्रज्ञरूपेण **प्राणः** स्यात्प्राणितीति च ।
यः प्राणनश्चेष्टयन् वा श्रुतिर्यः प्राणितीत्यपि ॥ ७ ॥

खण्डयन् प्रलये प्राणान् प्राणिनां **प्राणदो** मतः ।
तथा च योगवासिष्ठे सर्वप्राणिविमर्दनः ॥ ८ ॥

प्रणुवन्तीह यं वेदास्तस्मात्प्रणव उच्यते ।
इति स्मृतेर्बुधैरुक्तः **प्रणवो** हरिरेव सः ॥ ९ ॥

---

[1] चोदिता—**ग.**

महाप्रपञ्चरूपेण विस्तृतत्वात्पृथुर्हरिः ।
तस्मै प्रपञ्चरूपाय पृथवे हरये नमः ॥ १० ॥

ब्रह्माण्डं विद्यते [1] विष्णोर्यस्य गर्भे हिरण्मयम् ।
हिरण्यगर्भस्तेनोक्तः प्रसिद्धिर्यजुषश्रुतौ ॥ ११ ॥

लीलाशरीरिणोऽप्यस्य शत्रवस्सुरशत्रवः ।
शत्रून् हन्तीति शत्रुघ्नः स नः पायादपायतः ॥ १२ ॥

श्रीविष्णुः सर्वकार्याणां कारणत्वेन सर्वतः ।
व्याप्तत्वाद्व्याप्त इत्युक्तस्तं व्याप्तं देवमाश्रये ॥ १३ ॥

वाति गन्धं करोतीति पञ्चतन्मात्रकारणात् ।
वायुस्तथैव वायुर्वै क्षेपिष्ठेत्यादि [2]वेदगीः ॥ १४ ॥

अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।
एवमुद्योगपर्वोक्तमभेदा[3]द्यजवर्णयोः ॥ १५ ॥

कालात्मना लक्ष्यतेऽसावृतुशब्देन केशवः ।
तथा च भगवद्वाक्यमृतूनां कुसुमाकरः ॥ १६ ॥

सु शोभनं तु निर्वाणफलं ज्ञानं हि दर्शनम् ।
यस्येति यस्माद्वा विष्णुः स सुदर्शन उच्यते ॥१७॥

नमः कालाय ते मन्त्रात्कालः कलयतीत्यसौ ।
तथा च भगवद्वाक्यं कालः कलयतामहम् ॥ १८ ॥

परमेष्ठीति परमे स्थातुं शीलं [4]हृदम्बुजे ।
अस्याथ परमेष्ठी विराजस्तस्मादितिश्रुतेः ॥ १९ ॥

भक्त्या समर्पितं भक्तैः पत्रपुष्पफलादिकम् ।
परिगृह्णात्यसौ प्रीत्या परिग्रह उदाहृतः ॥ २० ॥

---

[1] विष्णौ यस्य—ग. [2] वेदतः—क. [3] द्यक्षपर्णयोः-क. [4] हृदम्बरे—ग.

नम उग्राय चेत्यादिश्रुतेरुग्रो भयप्रदः ।
वायुसूर्यादिदेवानां भीषाऽस्मादिति च श्रुतेः ॥ २१ ॥

संवसन्तीह भूतानि यस्मिन् संवत्सरो हरिः ।
सस्यार्धधातुकेत्यस्मादिति यस्तु वसेः सरः ॥ २२ ॥

सृष्टिस्थित्यन्तरूपाणि तथान्यान्यद्भुतानि च ।
क्षिप्रं करोतीति दक्षस्तस्मै दक्षाय ते नमः ॥ २३ ॥

मदादिभिरुपक्लेशैः शान्तानां च षडूर्मिभिः ।
विश्रामं कुरुते मोक्षं विश्रामस्तेन कीर्तितः ॥ २४ ॥

विश्वस्माद्दक्षिणः शक्तो यद्वा विश्वेषु कर्मसु ।
दाक्षिण्यादपि विश्वस्माद्विष्णुः स्याद्विश्वदक्षिणः ॥ २५ ॥

विस्तीर्यन्ते समस्तानि जगन्ति जगदात्मनि ।
अस्मिन्निति स विस्तारः स हरिस्तारकोऽस्तु नः ॥ २६ ॥

तिष्ठत्यस्मिन्निति स्थाणुः स्थितिशीलं धरादिकम् ।
स्थावरश्चाप्यसौ स्थाणुस्स[1]न्मात्रस्थावरो यतः ॥ २७ ॥

प्रत्यक्षादिप्रमाणं वा प्रमाणं संविदात्मना ।
सर्वप्रमाकरणतः प्रमाणं परमेश्वरः ॥ २८ ॥

स्वरूपस्यान्यथाभावविरहेणापि कारणम् ।
बीजमव्ययमित्युक्तो जगतां जगदीश्वरः ॥ २९ ॥

विष्णुः सुखैकरूपत्वात्सर्वाभीष्टप्रदत्वतः ।
समस्तैरर्थ्यते यस्मादर्थ इत्यभिधीयते ॥ ३० ॥

अनर्थः स हि सम्पूर्णकामत्वात्कमलापतेः ।
अर्थः प्रयोजनं नैव विद्यते यस्य सोऽच्युतः ॥ ३१ ॥

---

[1] न्मात्रे स्थावरो मतः—क.

आच्छादका महान्तोऽस्य कोशा ह्यन्नमयादयः ।
स **महाकोश** इत्युक्तो महाकोशाय ते नमः ॥ ३२ ॥

महान् भोगश्चिदानन्दस्वरूपोऽस्य जगत्पतेः ।
स सर्वात्मा **महाभोगो** भगवान् रुक्मिणीपतिः ॥ ३३ ॥

महद्धनं भवेदस्य भोगसाधनलक्षणम् ।
**महाधनः** स विज्ञेयः सर्वदा धनदोऽस्तु नः ॥ ३४ ॥

अवाप्तसर्वकामत्वान्निर्वे[1]दोऽस्य न विद्यते ।
इत्यसौ स्या**दनिर्विण्णो** निर्वाणफलदोऽस्तु नः ॥ ३५ ॥

**स्थविष्ठो**ऽतिशयेनासौ [2] स्थूलो वैराजरूपतः ।
अग्निर्मूर्धा चक्षुषी चन्द्रसूर्याविति च श्रुतेः ॥ ३६ ॥

**अभूर**ऽयमजन्मत्वात्सत्ता वा भवतीति भूः ।
व्यवस्थितविकल्पोऽयं नमस्तस्मै भुवेऽभुवे ॥ ३७ ॥

बध्यन्ते पशवस्तत्र धर्मसारा धनात्मकाः ।
इत्ययं **धर्मयूपः** स्याद्धर्मयूपः [3] स पातु नः ॥ ३८ ॥

[4] प्रयत्नात्तर्पिते यास्मिन् फलं निर्वाणलक्षणम् ।
मखा महान्तो जायन्ते यस्माद्वा स **महामखः** ॥ ३९ ॥

शिंशुमारात्मकं चक्रं विष्णुर्नेमिश्च तारकाः ।
**नक्षत्रनेमि**रित्यर्थः स्वाध्यायब्राह्मणोदितः ॥ ४० ॥

नक्षत्राण्यस्य सन्तीति **नक्षत्री** चन्द्ररूपतः ।
गीतायां स्मर्यते तद्वन्नक्षत्राणामहं शशी ॥ ४१ ॥

---

[1] दोऽस्मिन्—**ग.** [2] स्थितो—**ग.** [3] सनातनः—**क.** [4] प्रयच्छन्तोऽर्पिता य-**ग.**

समर्थोऽयं [1] समर्थेषु ब्रह्माण्डरचनादिषु ।
कार्येष्वतः **क्षमो** विष्णुः क्षेमभावक्षमोऽस्तु नः ॥ ४२ ॥

**क्षामः** सर्वविकारेषु स्वात्मनावस्थितो यतः ।
निष्ठातकारस्य मः स्यात् क्षायो म इतिसूत्रतः ॥ ४३ ॥

सृष्टिस्थितिलयार्थेषु यतोऽयं सम्यगीहते ।
अतः **समीहनो** विष्णुः प्रयच्छतु समीहितम् ॥ ४४ ॥

सर्वयज्ञस्वरूपत्वाद्विष्णुर्यज्ञाभिधः स्मृतः ।
यज्ञो वै विष्णुरिति च श्रुतेर्यज्ञाय ते नमः ॥ ४५ ॥

**इज्यो**ऽयमेव यष्टव्यः पुण्यैस्सर्वमखैर्हरिः ।
विष्णुमेव यजन्तीति हरिवंशेऽप्युदीरितम् ॥ ४६ ॥

यष्टव्योऽयं प्रकर्षेण यष्टव्यास्वन्यमूर्तिषु ।
मोक्षैकफलदातृत्वान्**महेज्यो** मुनिभिः स्मृतः ॥ ४७ ॥

यो यूपसहितो यज्ञः क्रतुरित्युच्यते बुधैः ।
**क्रतु**स्तदात्मकत्वाच्च स्मृतेश्च क्रतुभुक्क्रतुः ॥ ४८ ॥

सत्रं यज्ञविशेषः स्यात् सर्वयज्ञमयो ह्ययम् ।
सतो वा त्रायत इति **सत्रं** सत्राय ते नमः ॥ ४९ ॥

मुमुक्षूणां सतां विष्णुरनन्या गतिरित्यपि ।
**सतां गतिः** श्रीगोपालः सद्गतिं नः प्रयच्छतु ॥ ५० ॥

स्वाभाविकेन बोधेन सर्वेषां प्राणिनां कृतम् ।
**सर्वदर्शी** पश्यतीति श्रुतोऽयं शास्त्रदर्शिभिः ॥ ५१ ॥

**विमुक्तात्मा** श्रुतस्तत्र विमुक्तश्च विमुच्यते ।
विमुक्तश्चाप्यसावात्मा समासः कर्मधारयः ॥ ५२ ॥

---

[1] समस्तेषु—क.

इदं सर्वं यदयमात्मेत्यादिश्रुतिबोधनात् ।
सर्वश्चासौ तथा ज्ञश्च **सर्वज्ञः** समुदीरितः ॥ ५३ ॥

सविशेषणमित्येकं नामेदं **ज्ञानमुत्तमम्** ।
अजन्यमनवच्छिन्नं सत्यं ज्ञानमिति श्रुतेः ॥ ५४ ॥

शोभनं व्रतमस्येति **सुव्रतः** स्यात्तथा [1]स्मृतिः ।
अभयं [2]सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥ ५५ ॥

शोभनं मुखमस्येति **सुमुखः** श्रुति[3]बोधितः ।
प्रसन्नवदनं चारु पद्मपत्रायतेक्षणम् ॥ ५६ ॥

दुर्विज्ञेयतया **सूक्ष्मः** सूक्ष्मत्वादिति च श्रुतेः ।
तथा सर्वगतं सूक्ष्ममिति च [4]श्रुतिचोदितम् ॥ ५७ ॥

मेघगम्भीरघोषत्वात्**सुघोषो** वा सुशोभनः ।
घोषो वेदात्मको वेति सुघोषः पोषकोऽस्तु नः ॥ ५८ ॥

सतां सुखं ददातीति **सुखदो** [5]वाऽसतां तथा ।
सुखं खण्डयतीत्यस्मात्सुखदश्चाभिरक्षतु ॥ ५९ ॥

लोके प्रत्युपकारस्य निरपेक्षतया हरिः ।
भक्तोपकारं कुरुते यतः **सुहृदि**तीरितः ॥ ६० ॥

चिदानन्दैकरूपत्वान्मनो हरति माधवः ।
सर्वेषामपि भक्तानामतः प्रोक्तो **मनोहरः** ॥ ६१ ॥

क्रोधो येन जितः सोऽयं **जितक्रोधो** जयत्यसौ ।
दैत्यान् धर्मस्थापनार्थं न तु क्रोधवशाद्धरिः ॥ ६२ ॥

बाहवो हि भुजा यस्य वीरा विक्रमशालिनः ।
स **वीरबाहु**र्बहुधा भूयाद्यो धर्मबोधकः ॥ ६३ ॥

---

[1] स्मृतः–क. [2] सर्वथा–ग. [3] चोदितः–ग. [4] स्मृति–क. [5] वा तथासताम्–ग.

विदारयति वेदोक्तधर्मविच्युतमानसान् ।
विष्णुर्विदारणस्तेन गदितो वेदकोविदैः ॥ ६४ ॥

प्राणिनः [1] स्वापयन्नात्मसम्बोधविधुरान् हरिः ।
कुर्वन् स मायया सर्वान् **स्वापनः** शास्त्रसम्मतः ॥ ६५ ॥

मायापरवशास्सर्वे ब्रह्मेशानपुरोगमाः ।
स्वतन्त्रत्वात्स्वयं विष्णुः **स्ववशः** कथ्यते बुधैः ॥ ६६ ॥

**व्यापी** स्यात्सर्वकार्याणां व्यापनात्कारणत्वतः ।
आकाशवत्सर्वगत इत्यादिश्रुतिबोधनात् ॥ ६७ ॥

विभूतिभिरनेकाभिर्विष्णुस्तिष्ठन्ननेकधा ।
**नैकात्मा** तेन निर्दिष्टस्तस्मै नैकात्मने नमः ॥ ६८ ॥

जगदुत्पत्तिसम्पत्तिविपत्त्यादीन्यनेकधा ।
करोति बहुकर्माणि ततोऽयं **नैककर्मकृत्** ॥ ६९ ॥

**वत्सरो** भगवान् विष्णुर्वसत्यत्राखिलं जगत् ।
स मामवतु संसारे प्रोत्सार्य मदमत्सरान् ॥ ७० ॥

निजभक्तेष्वतिस्नेहवशाद्वै **वत्सलो** मतः ।
तेषामहं समुद्धर्तेत्येवं श्रीभगवद्वचः ॥ ७१ ॥

जगत्पितुर्यस्य हस्ते वत्सभूताः प्रजा इति ।
**वत्सी** कृष्णावतारे वा वत्सानां परिपालनात् ॥ ७२ ॥

**रत्नगर्भो** हि रत्नानि गर्भभूतानि यस्य [2] ते ।
स समुद्रस्तथा गीता सरसामस्मि सागरः ॥ ७३ ॥

यदाज्ञामन्तरा लोको धनं न लभते क्वचित् ।
अतो **धनेश्वरो** विष्णुर्वित्तेश इति [3] कृष्णवाक् ॥ ७४ ॥

---

[1] स्वपयन्–ग. [2] वै–ग. [3] वैष्णवाः–क.

धर्मं गोपायतीत्येष **धर्मगुप्**तत्र च स्मृतः ।
धर्मगोपनमेव स्यादवतारप्रयोजनम् ॥ ७५ ॥

स्वयं धर्मादिरहितः शासनार्थं शरीरिणाम् ।
धर्ममेव करोतीति **धर्मकृद्**धर्मिभिः स्मृतः ॥ ७६ ॥

धर्मोऽस्यास्तीत्ययं **धर्मी** धर्माधारतया हरिः ।
निर्मातु धर्मजं शर्म [1]भित्वा कर्माखिलं मम ॥ ७७ ॥

सदेव सोम्येदमिति श्रुतेरवितथं परम् ।
**ब्रह्म सन्**नाम [2]सम्प्रोक्तं नमोऽस्तु ब्रह्मणे सते ॥ ७८ ॥

असत्त्वादिदमित्यादि वाचारम्भणमित्यपि ।
श्रुतेर्ब्रह्मापरम**सत्**तज्जीयाज्जगदात्मकम् ॥ ७९ ॥

समस्तानीह भूतानि ब्रह्म यत् क्षरमुच्यते ।
क्षरः सर्वाणि भूतानीत्यवोचद्भगवान् स्वयम् ॥ ८० ॥

**अक्षरं** ब्रह्म कूटस्थं कूटवन्निर्विकारतः ।
तथैव भगवद्वाक्यं कूटस्थोऽक्षर उच्यते ॥ ८१ ॥

उताविद्वानमुं लोकं प्रेत्येत्यादिश्रुतेरपि ।
**अविज्ञाता** स्वयं विष्णुर्जीवभूतः सनातनः ॥ ८२ ॥

सहस्राण्यंशवोऽनन्ता [3]अस्यैवादित्यगा अपि ।
**सहस्रांशु**र्येन सूर्यस्तपतीत्यादिकश्रुतेः ॥ ८३ ॥

विदधाति **विधाता**यं शेषदिग्गजभूधरान् ।
धाता विधाता परमोत सन्दृगिति याजुषी ॥ ८४ ॥

आत्मनो वक्षसि कृतं येन श्रीवत्सलाञ्छनम् ।
कृतं वा लक्षणं शास्त्रं [4]येनासौ **कृतलक्षणः** ॥ ८५ ॥

---

[1] छित्वा–ग. [2] तत्प्रोक्तं–ग. [3] अस्मिन्नादि–क. [4] येन स–क.

गभस्तिचक्रस्य मध्ये स्थितः सूर्यात्मना यतः ।
गभस्तिनेमिरित्युक्तस्तस्मै सूर्यात्मने नमः ॥ ८६ ॥

विष्णुः [1] सत्वगुणं यस्मात्प्राधान्येनाधितिष्ठति ।
सत्वस्थो वाथ [2] सत्वेषु प्राणिषु प्रतितिष्ठति ॥ ८७ ॥

विक्रमात्सिंहवत्सिंहो नृसिंहो वैकदेहतः ।
नृशब्दलोपेन सत्यभामा भामेति वै स्मृतः ॥ ८८ ॥

गणेशशिवभेतालभूताद्या य इहेश्वराः ।
तेषां महानीश्वरोऽयं ततो भूतमहेश्वरः ॥ ८९ ॥

आदीयन्तेऽत्र भूतानीत्यादिदेवोऽपि दीव्यति ।
आदिश्चासौ तथा देव आदिदेवः स नोऽवतु ॥ ९० ॥

महान् महीयत इति देवो दीव्यति मोदते ।
महांश्चासौ तथा देवो महादेव इति स्मृतः ॥ ९१ ॥

देवेशः सर्वदेवानामीशः प्राधान्यतो यतः ।
भो देवेश ! महावास ! वासमाशास्महे वयम् ॥ ९२ ॥

यो हि देवान् बिभर्तीति देवभृत्पाकशासनः ।
तस्यापि शासिता यस्माद्देवभृद्गुरुरुच्यते ॥ ९३ ॥

यदुत्कृष्टो हि विश्वस्माद्भवतीत्युत्तरो हरिः ।
बह्वृचे श्रूयतेऽप्येवं विश्वस्मादिन्द्र उत्तरः ॥ ९४ ॥

गौर्मही तत्पतित्वाद्वा गवां च परिपालनात् ।
गोपवेषधरो देवो गोपतिर्नः पतिर्भवेत् ॥ ९५ ॥

---

[1] सत्वगुणे–क. सत्वगुणो–ग. [2] सर्वेषु–ग.

गोपायति जगत्सर्वमिति गोप्ता जनार्दनः ।
गोप्ता त्रिभुवनस्यायं तव पुत्र इति स्मृतेः ॥ ९६ ॥

[1]ज्ञानेनैव जगन्नाथो गम्यते न तु कर्मणा ।
न चैव ज्ञानकर्मभ्यां ज्ञानगम्यस्ततः स्मृतः ॥ ९७ ॥

[2]अपरिच्छिन्नरूपो हि यतः कालेन केशवः ।
अतः पुरापि भवति विद्यतेऽयं पुरातनः ॥ ९८ ॥

शरीरारम्भकाणां हि भूतानां भर[3]णाद्धरिः ।
शरीरभूतभृत्प्रोक्तः प्राणरूपधरो यतः ॥ ९९ ॥

भोक्तानवधिकानन्दसान्द्रसम्भोगवत्तया ।
तथा च गीतावचनं भर्ता भोक्ता महेश्वरः ॥ १०० ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे जातं शतं पञ्चमम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा वीराख्यसुममञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्मप्रसूनाञ्जलौ वीरमञ्जरी समाप्ता.

---

[1] न गम्यो ज्ञानकर्मभ्यां कर्मणा केवलेन वा ।
ज्ञानेन गम्यते किन्तु ज्ञानगम्यस्तथा स्मृतः ॥—ग.

[2] विश्वस्माच्च पुरा पूर्वं भवतीति पुरातनः ।
यतः कालपरिच्छेदरहितो हि तदास्तु नः ॥—ग.

[3] णादयम्—ग.

सुग्रीवहनुमन्मुख्यकपीनां परिपालनात् ।
इन्द्रः स्वामी भवेद्रामः **कपीन्द्रो** रघुनन्दनः ॥ १ ॥

दक्षिणा भूरि येषां ते यज्ञाः स्युर्भूरिदक्षिणाः ।
अश्वमेधादयो यस्मिन्नित्यसौ **भूरिदक्षिणः** ॥ २ ॥

यो देवतास्वरूपत्वाद्यज्ञेषु यजतां पतिः ।
सोमं पिबति तेनासौ **सोमपः** कामदोऽस्तु नः ॥ ३ ॥

असुरैर्ह्रियमाणं तु समुद्रमथनेऽमृतम् ।
पातीति वा स्वयं देवैः पिबन्न**मृतपः** सह ॥ ४ ॥

पोषयन्नोषधीः सोमरूपः **सोमो**ऽथवा शिवः ।
उमया सहितः सोमः पातु विष्णुः शिवात्मकः ॥ ५ ॥

**पुरुजि**द्विष्णुरेवायं जयतीति पुरून् बहून् ।
पुरुषार्थप्रदो मेऽस्तु पुरुजित्पुरुषोत्तमः ॥ ६ ॥

पुरुः स्याद्विश्वरूपत्वादुत्कृष्टत्वाच्च सत्तमः ।
पुरुश्चासौ सत्तमश्च श्रीहरिः **पुरुसत्तमः** ॥ ७ ॥

तत्करोति तदाचष्ट इति णिज्विनयाद्भवेत् ।
[1] पचाद्यचि णिलोपे च **विनयो** दण्डकृद्यतः ॥ ८ ॥

जयतीति जगत्सर्वं विष्णुरेव **जया**भिधः ।
गीतायां दशमेऽध्याये जयोऽस्मीति प्रदर्शितम् ॥ ९ ॥

---

[1] विष्णुरेव च लोकैककवि–क.

सत्या सन्धास्य सङ्कल्पः **सत्यसन्ध** इति स्मृतः ।
तथा च सत्यसङ्कल्प इति च श्रुतिभाषितम् ॥ १० ॥

दशार्हकुलसम्भूतो दाशो दानं तदर्हति ।
इति वाथ स **दाशार्हो** मदर्हामर्हताद्धरिः ॥ ११ ॥

सात्वतं नाम तन्त्रं तत्करोतीत्यादिशासनात् ।
णिचि क्विपि णिलोपे च तेषां वै **सात्वतां पतिः** ॥ १२ ॥

प्राणान् क्षेत्रज्ञरूपेण धारयन् **जीव** उच्यते ।
स एव जीवो विवरप्रसूतिरिति च [1] स्मृतेः ॥ १३ ॥

विनयित्वं विनयिता साक्षात्तां पश्यतीत्यसौ ।
विष्णु**र्विनयितासाक्षी**त्येकं पदमुदाहृतम् ॥ १४ ॥

विष्णुर्मुक्तिं ददातीति **मुकुन्दो** मुनिभिः स्मृतः ।
साधुः पृषोदरादित्वान्निरुक्तिर्वर्णसाम्यतः ॥ १५ ॥

अमिताः पादविक्षेपाः विक्रमा अस्य वै त्रयः ।
अमितो विक्रमः शौर्यमस्य वा**मितविक्रमः** ॥ १६ ॥

**अम्भोनिधि**र्निधीयन्ते यत्राम्भांसि सुरादयः ।
एतानि चत्वार्यम्भांसि यत इत्यादिकश्रुतेः ॥ १७ ॥

देशतः कालतो वस्तुतोऽपरिच्छिन्नरूपतः ।
तेन विष्णु**रनन्तात्मा** मामव्यादात्मलीलया ॥ १८ ॥

स्वयमेकार्णवे शेते सर्वभूतानि संहरन् ।
**महोदधिशय**स्तेन कृष्णद्वैपायनोदितः ॥ १९ ॥

---

[1] श्रुतेः—ग.

अन्तं नाशं करोतीति भूतानामन्तको मतः ।
**अन्तकः** सर्वलोकानामिति स्मृतिसरस्वती ॥ २० ॥

आद्विष्णोर्जायत इति कामोऽजः सर्वजन्तुषु ।
यः सर्वकामान्नो दद्यात्कामो दातेति च श्रुतेः ॥ २१ ॥

महः पूजा तदर्हत्वान्महार्हः स्याज्जगद्गुरुः ।
समस्तैः पूजितः सोऽयं सुरासुरनरोरगैः ॥ २२ ॥

[1] स्वाभाव्येनैव नो भाव्यो नित्यनिष्पन्नरूपतः ।
**स्वाभाव्यस्तेन** [2] मन्तव्यः स्वभावाद्भावयाम्यहम् ॥ २३ ॥

जिता अमित्रा रागाद्या बाह्या वै रावणादयः ।
येनासौ स्याज्जितामित्रो मदमित्राण्यपोहतु ॥ २४ ॥

स्वात्मामृतरसास्वादात्प्रकृष्टं मोदतेऽथवा ।
ध्यायिप्रमोदं कुरुते यतो विष्णुः **प्रमोदनः** ॥ २५ ॥

अस्य स्वरूपमानन्द इत्यानन्दाभिधो हरिः ।
तथा च श्रुतिरानन्दो ब्रह्मेतीत्यादि भाषते ॥ २६ ॥

यस्त्वेकशरणान् भक्तान् विष्णुर्नन्दयतीत्यसौ ।
**नन्दनः** स्यात्पुराणेषु पठ्यते विश्वनन्दनः ॥ २७ ॥

विष्णुः समृद्धो लोकेऽस्मिन् सर्वाभिरुपपत्तिभिः ।
इति **नन्दाह्वयो** भूयात्सदानन्दकरो मम ॥ २८ ॥

सत्यज्ञानादयो धर्मा यस्यासाविति माधवः ।
**सत्यधर्मेति** विख्यातः स मे धर्मार्थदो हरिः ॥ २९ ॥

---

[1] स्वभावेनैव–ग.  [2] सम्भाव्यः-क.

हरिवंशे त्रिरित्येव त्रयो लोकाः प्रकीर्तिताः ।
क्रामत्येतान्विशेषेण तस्मात्सोऽयं **त्रिविक्रमः** ॥ ३० ॥

**महर्षिः कपिलाचार्यो** नामैकं स्याच्छ्रुतेः स्मृतेः ।
ऋषिं [1]महान्तं कपिलं सिद्धानां कपिलो मुनिः ॥ ३१ ॥

कृतं कार्यं जगत्सर्वमात्मा ज्ञः कर्मधारयात् ।
कृतं च तदथ ज्ञश्च **कृतज्ञः** कविभिः स्मृतः ॥ ३२ ॥

विश्वम्भराया मेदिन्याः पतित्वान्**मेदिनीपतिः** ।
किञ्च स्मृतिप्रसिद्धश्च नाविष्णुः पृथिवीपतिः ॥ ३३ ॥

पदानि त्रीणि यस्यासौ **त्रिपदः** श्रुतिचोदितः ।
[2]तथा चेदं त्रीणि पदा विचक्रम इति श्रुतेः ॥ ३४ ॥

गुणावेशेन सञ्जातास्तिस्रोऽवस्था दशाः स्मृताः ।
तासामध्यक्ष इति च **त्रिदशाध्यक्ष** उच्यते ॥ ३५ ॥

मत्स्यः सन् प्रलयाम्भोधौ शृङ्गं वहति मायया ।
बध्वा नावं क्रीडतीति **महाशृङ्गो** हरिः स्वयम् ॥ ३६ ॥

कृतस्य वाथ कार्यस्य नाशमन्तं करोति यत् ।
मृत्युं कृतान्तं श्रीविष्णुः कृन्ततीति **कृतान्तकृत्** ॥ ३७ ॥

महांश्चासौ वराहश्च देवः क्रीडावतारभृत् ।
**महावराहस्**तेनोक्तः सुरासुरवरप्रदः ॥ ३८ ॥

वेदान्त[3]वाक्यैर्गोविन्दो विन्दते गोभिरेव हि ।
गोभिरेव यतो वेद्यो **गोविन्दः** [4]स इति स्मृतेः ॥ ३९ ॥

---

[1] प्रभूतं—ग. [2] तथा चेत्थं—ग. [3] वाग्भिर्गो—ग. [4] इति च स्मृतेः—ग.

सु शोभना विनिर्दिष्टा सेना यस्य गणात्मिका ।
सुषेणो भगवान् विष्णुः शेषशायी स मे गतिः ॥ ४० ॥

यस्य स्वर्णमयान्याहुरङ्गदानि जगत्पतेः ।
सर्वभूषाभूषणस्य सम्प्रोक्तः कनकाङ्गदी ॥ ४१ ॥

रहस्योपनिषद्वेद्यो गुहायां हृदयाम्बरे ।
निहितश्चेति वा गुह्यो गुहाविष्ट इति स्मृतेः ॥ ४२ ॥

गम्भीरोऽयं भवेत्सत्यज्ञानैश्वर्यबलादिभिः ।
गम्भीरस्तेन यः प्रोक्तो गम्भीरोऽहं तमाश्रये ॥ ४३ ॥

अवस्थात्रितये भावाभावसाक्षितयाथवा ।
दुष्प्रवेशतया विष्णुर्गहनो गीयते बुधैः ॥ ४४ ॥

गुप्तोऽयं श्रूयते विष्णुरवाङ्मनसगोचरः ।
एष सर्वेषु भूतेषु [1] गूढोत्मा न प्रकाशते ॥ ४५ ॥

मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम् ।
धारयन् लोकरक्षार्थमुक्तश्चक्रगदाधरः ॥ ४६ ॥

विधातेति भवेद्वेधा रजोगुणसमाश्रितः ।
प्रोक्तं पृषोदरादित्वात्साधुत्वं तस्य शाब्दिकैः ॥ ४७ ॥

सहकारी स्वयं चाङ्गं यतोऽयं कार्यनिर्मितौ ।
ततस्स्वाङ्गो भवेद्विष्णुर्भवेत्स्वाङ्गाय ते नमः ॥ ४८ ॥

न [2] केनाप्यवतारेषु सर्वेष्वप्यजितो जितः ।
वन्दे तमजितं देवं मुकुन्दं नन्दनन्दनम् ॥ ४९ ॥

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
इति विष्णुपुराणाच्च कृष्णो व्यासस्स्वयं हरिः ॥ ५० ॥

---

[1] गूढोऽसौ-ग.  [2] केष्वप्य—क.

यस्य स्वरूपसामर्थ्यज्ञानैश्वर्यादिकस्य च ।
प्रच्युत्यभावात्सम्प्रोक्तो देवो नारायणो **दृढः** ॥ ५१ ॥

सङ्कर्षतीत्यच्युतः सन् प्रलये युगपत्प्रजाः ।
**सङ्कर्षणोऽच्युत** इति नामैकं सविशेषणम् ॥ ५२ ॥

सायंगतोऽर्को **वरुणो** रश्मिसंवरणात्स्वयम् ।
तैत्तिरीयश्रुतिस्तद्वदिमं मे वरुण श्रुधी ॥ ५३ ॥

अपत्यं वरुणस्येति **वारुणो** भगवान् ऋषिः ।
वसिष्ठो हि स्वयं विष्णुर्ऋषिः सप्तर्षयोऽप्यहम् ॥ ५४ ॥

**वृक्षो**ऽयमचलत्वेन स्थितो वृक्ष इवाच्युतः ।
तथा वृक्ष इव स्तब्धो दिवीत्यादिश्रुतेर्वचः ॥ ५५ ॥

यश्चिन्तितस्वरूपेण पुष्करे हृदयाम्बुजे ।
अक्ष्णोति तत्र व्याप्नोति **पुष्कराक्ष**स्ततः स्मृतः ॥ ५६ ॥

मनसैव जगत्सृष्टिं संहारं च करोति यः ।
इति विष्णुपुराणोक्तो गोपालोऽयं **महामनाः** ॥ ५७ ॥

मोक्षैश्वर्ययशोधर्मश्रीवैराग्यानि षड् भगाः ।
यस्य सन्तीति **भगवां**स्तस्मै भगवते नमः ॥ ५८ ॥

ऐश्वर्यादिभगं सर्वं संहारसमये हरिः ।
भगं हन्तीति **भगहा** देवो भाग्यप्रदोऽस्तु नः ॥ ५९ ॥

सर्वदा सुखरूपत्वादानन्दो यस्य विद्यते ।
यद्वा सम्पत्समृद्धत्वाद्**आनन्दी** नन्दनन्दनः ॥ ६० ॥

वनमालां वैजयन्तीं भूततन्मात्रलक्षणाम् ।
तां वहन् खलु विश्वात्मा **वनमाली** जनार्दनः ॥ ६१ ॥

हलमायुधमस्येति बलभद्रावतारतः ।
हलायुधः सीरपाणिर्हलं कलयते नमः ॥ ६२ ॥

विष्णुर्वामनरूपेण जातोऽयं कश्यपाद्यतः ।
अदित्यामिति चादित्यः सत्यवाचं करोतु माम् ॥ ६३ ॥

सावित्रे मण्डले संस्थो ज्योतिरादित्य उच्यते ।
यदादित्यगतं तेज इत्यादिभगवद्वचः ॥ ६४ ॥

द्वन्द्वानि शीतोष्णादीनि सहिष्णुः सहते यतः ।
विष्णुः पुष्णातु मे नित्यं शीतोष्णादिसहिष्णुताम् ॥ ६५ ॥

गतिः स्यान्मोक्षरूपत्वात्सर्वोत्कृष्टो हि सत्तमः ।
गतिश्चासौ सत्तमश्च गोपालो गतिसत्तमः ॥ ६६ ॥

सु शोभनं यस्य [1] धनुः शार्ङ्गमस्तीति केशवः ।
सुधन्वने चेति वेदात्सुधन्वा हरिरुच्यते ॥ ६७ ॥

शत्रूणां खण्डनात् खण्डः परशुर्यस्य चायुधम् ।
जामदग्न्यावतारस्य स खण्डपरशुः स्मृतः ॥ ६८ ॥

दैत्या वा दानवा वेदधर्ममार्गविरोधिनः ।
तेषां दारुणरूपत्वाद्दारुणः शरणं मम ॥ ६९ ॥

द्रविणं वाञ्छितं द्रव्यं भक्तेभ्यः प्रददाति यः ।
द्रविणप्रद इत्युक्तः स मेऽस्तु द्रविणप्रदः ॥ ७० ॥

दिविस्पृक् परमात्मैव ह्युभ्यां चेति डेरलुक् ।
नाकस्य पृष्ठे महतो महीयानिति च श्रुतेः ॥ ७१ ॥

सर्वज्ञानां सर्वदृशां व्यासो विस्तारकृद्यतः ।
ब्रह्मा वा सर्वदृग्व्यासः सर्वदृग्व्यस्तवेदतः ॥ ७२ ॥

---

[1] शार्ङ्गं धनुरस्तीति—ग.

यः पतिः सर्वविद्यानां जनन्यां च न जायते ।
पदद्वयं च नामैकं वाचस्पतिरयोनिजः ॥ ७३ ॥

देवव्रतसमाख्यातैर्यस्त्रिभिः सामभिः स्तुतः ।
स त्रिसामेति निर्दिष्टः सामगानविचक्षणैः ॥ ७४ ॥

सामगः श्रीमहाविष्णुर्यः स्वयं साम गायति ।
तथा चैतत्साम गायन्नास्त इत्यादियाजुषी ॥ ७५ ॥

हरिः साम समाख्यातः सामवे[1]दस्वरूपतः ।
वेदानां समवेदोऽस्मीत्येवं श्रीभगवद्वचः ॥ ७६ ॥

मोक्षरूपतया सर्वदुःखोपशमलक्षणम् ।
परमानन्दरूपं यद्ब्रह्म निर्वाणमुच्यते ॥ ७७ ॥

संसारो हि महारोगो यतस्तापत्रयात्मकः ।
तन्नाशनैकहेतुत्वाद्भेषजं भगवान् हरिः ॥ ७८ ॥

स्याद्भिषग्भवरोगार्तिविनाशनविचक्षणः ।
भिषक्तमं त्वा भिषजां शृणोमीति श्रुतेः स्मृतेः ॥ ७९ ॥

चतुर्थमाश्रमं लोके मोक्षार्थं कृतवानिति ।
सन्न्यासकृदिति प्रोक्तो देवः सन्न्यासवेदिभिः ॥ ८० ॥

यतीनां शममाचष्ट इत्ययं शमसंज्ञकः ।
यतीनां प्रशमो धर्म इत्यादिस्मृतिबोधितः ॥ ८१ ॥

शान्तो विषयसौख्येषु देवोऽसक्ततया स्मृतः ।
निष्कलं निष्क्रियं शान्तमिति श्रुतिषु गीयते ॥ ८२ ॥

विष्णौ तिष्ठन्ति भूतानि प्रलये नितरामिति ।
यस्मिन् स कृष्णो निष्ठाख्यो मम निष्ठास्तु तत्र वै ॥ ८३ ॥

[1] दस्य रूपतः—ग.

सर्वाविद्यानिवृत्तिस्तु शान्तिरित्युच्यते बुधैः ।
सा ब्रह्मैव परिप्रोक्ता ब्रह्म शान्तिरिति श्रुतेः ॥ ८४ ॥

परमुत्कृष्टमयनं स्थानमावृत्तिवर्जितम् ।
परायणं स्यात्पुल्लिङ्गे बहुव्रीहिरुदाहृतः ॥ ८५ ॥

शुभं हि सुन्दरं देहं धारयन् जगदीश्वरः ।
शुभमङ्गं [1] यदस्यासौ शुभाङ्गः शुभदोऽस्तु नः ॥ ८६ ॥

रागद्वेषादिनिर्मोकलक्षणां शान्तिमीश्वरः ।
स्वभक्तेभ्यो ददातीति शान्तिदः शान्तिदोऽस्तु मे ॥ ८७ ॥

सर्गादौ सर्वभूतानां स्रष्टा स्रष्टेति गीयते ।
स्रष्टारं सर्वलोकानामिति स्मृतिरुदाहृता ॥ ८८ ॥

कौ भूम्यां मोदते विष्णुर(कुर्वन्न)वतारान् बहून् यतः ।
ततोऽयं कुमुदो देवो मोदं मह्यं प्रयच्छतु ॥ ८९ ॥

कोः क्षितेर्वलनादम्बु कौ भूम्यां [2] वलतेऽथ वा ।
शेषोदरं च कुवलं [3] शेतेऽत्र कुवलेशयः ॥ ९० ॥

गोवर्धनं गोवृद्ध्यर्थं [4] धृतवानिति गोहितः ।
भूमेर्भारापहारार्थमवतारग्रहा यदि ॥ ९१ ॥

गोर्भूम्यादेः पतिः कृष्णः पालनाद्गोपतिर्मतः ।
गोगोपगोपिकानाथो गोपतिस्त्वं ददातु नः ॥ ९२ ॥

गोपायति जगत्सर्वमिति गोप्ता गुरोर्गुरुः ।
गोप्ता त्रिभुवनस्यायमिति स्कन्द[5]पुराणवाक् ॥ ९३ ॥

---

[1] च यस्यासौ—क. [2] शेरते—ग. ? [3] तच्छायी—ग. [4] धृतवान् गोहिता यतः—ग. [5] पुराणतः—क.

वृषो हि वृषभो धर्मः स दृष्टिर्यस्य चक्रिणः ।
वृषभाक्षः स पद्माक्षः प्रत्यक्षोऽस्तु विपक्षहृत् ॥ ९४ ॥

वृषो धर्मः प्रियो यस्य श्रीहरिः स वृषप्रियः ।
वा प्रियस्येति वै पूर्वनिपातस्य विकल्पतः ॥ ९५ ॥

सुराणामसुराणां च देवोऽयं सङ्गराङ्गणात् ।
अनिवर्ती भवेद्विष्णुर्यतोऽसौ न निवर्तते ॥ ९६ ॥

स्वभावतो वा विषयादधर्माद्वा निवर्तते ।
निवृत्त आत्मा यस्येति निवृत्तात्मा हरिः स्मृतः ॥ ९७ ॥

विस्तृतं च जगत्सर्वं संहारसमये हरिः ।
संक्षिपन् सूक्ष्मरूपेण संक्षेप्ता क्षेमदोऽस्तु नः ॥ ९८ ॥

[1] उपेतान्निजभक्तान्यः परिरक्षन् प्रतिक्षणम् ।
क्षेमं करोतीति विष्णुः क्षेमकृत्क्षेमकृन्मम ॥ ९९ ॥

स्मृतिमात्रेण यो भक्तान् पालयन् शिव उच्यते ।
स ब्रह्म स शिवः सेन्द्र इति नारायणेरितम् ॥ १०० ॥

श्रीमद्विट्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे षष्ठं शतं सङ्गतम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा कपीन्द्राभिधमञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्मप्रसूनाञ्जलौ
कपीन्द्रमञ्जरी समाप्ता ।

---

[1] उपात्तान्—ग.

# श्रीवत्सवक्षोमञ्जरी

श्रीवत्ससंज्ञकं चिह्नं यस्य वक्षसि विद्यते ।
स वै **श्रीवत्सवक्षाः** स्यान्नमः श्रीवत्सवक्षसे ॥ १ ॥

लक्ष्मीर्वक्षसि वै विष्णोः श्रीर्वक्षस्यनपायिनी ।
**श्रीवासा**स्तेन निर्दिष्टः श्रीवासो मयि दीयताम् ॥ २ ॥

श्रीरेनं वरयामास विहायैव सुरासुरान् ।
**श्रीपति**स्तेन विख्यातः पातु पद्मांकवल्लभः ॥ ३ ॥

त्रयी श्रुतिः श्रीः श्रीमन्तो ब्रह्माद्याः **श्रीमतां वरः** ।
ऋचः सामानि यजूंषि सा हि श्रीरमृताश्रुतेः ॥ ४ ॥

माधवो निजभक्तेभ्यो ददाति श्रियमुत्तमाम् ।
तेन **श्रीद** इति ख्यातस्तस्मै श्रीदाय ते नमः ॥ ५ ॥

इन्दिरायाः श्रियः स्वामी श्रीशः **श्रीश** इति स्मृतः ।
लक्ष्मीपते ! मधुरिपो ! पुरुषेत्यादिकस्मृतेः ॥ ६ ॥

श्रीशब्देन तु लक्ष्यन्ते श्रीमन्तस्तेष्वयं हरिः ।
वसतीति **श्रीनिवासः** श्रीनिवासाय मङ्गलम् ॥ ७ ॥

**श्रीनिधि**स्तु श्रियः सर्वा निधीयन्तेऽत्र शक्तयः ।
परास्य शक्तिर्विविधैव श्रूयत इति श्रुतेः ॥ ८ ॥

यो भावयति भूतानां करणाद्विविधाः श्रियः ।
श्रियं विभावयति वा तेनासौ **श्रीविभावनः** ॥ ९ ॥

जननीं सर्वभूतानां श्रियं वक्षसि संवहन् ।
**श्रीधरः** स्मृतिरप्यत्र लक्ष्मीर्वक्षसि यस्य तु ॥ १० ॥

स्मरतां स्तुवतां नित्यं श्रीधरोऽर्चयतां सताम् ।
श्रियं करोति भक्तानामिति **श्रीकर** उच्यते ॥ ११ ॥

अनपायिसुखावाप्तिलक्षणात्परमेश्वरः ।
मुनिभिः **श्रेय** इत्युक्तः श्रेयोऽमृत इति स्मृतेः ॥ १२ ॥

यस्य सन्ति श्रियः सर्वाः समस्तैश्वर्यलक्षणाः ।
स **श्रीमा**निति विद्वद्भिर्विनिर्दिष्टो विशेषतः ॥ १३ ॥

त्रयाणामपि लोकानामाश्रयत्वादयं हरिः ।
**लोकत्रयाश्रयः** प्रोक्तस्त्रिलोकेश! नमोऽस्तु ते ॥ १४ ॥

शोभने पुण्डरीकाभे [1]हरेरस्याक्षिणी इति ।
स **स्वक्षः** सर्वदा मह्यं ददातु सुखमुत्तमम् ॥ १५ ॥

सु शोभनानीत्यङ्गानि यस्य सन्ति जगत्पतेः ।
श्रीरङ्गशायी स **स्वङ्गः** सर्वाङ्गक्षेमदोऽस्तु नः ॥ १६ ॥

एको हि परमानन्द उपाधीनां प्रभेदतः ।
शतधा भिद्यत इति **शतानन्दः** श्रुतीरितः ॥ १७ ॥

भवेन्नारायणो **नन्दिः** परमानन्दविग्रहः ।
अथोपनिषदि प्रोक्तं तन्नो नन्दिः प्रचोदयात् ॥ १८ ॥

**ज्योतिर्गणानां** चन्द्राग्निसूर्याणामीश्वरो हरिः ।
तमेव भान्तमनुभाति सर्वमिति च श्रुतेः ॥ १९ ॥

विशेषेण जितं येन मनो ह्यात्मा स माधवः ।
**विजितात्मे**ति विख्यातो नमोऽस्तु विजितात्मने ॥ २० ॥

---

[1] हरेर्यस्या—ग.

यस्य स्वरूपमात्मा हि विधेयो न हि केनचित् ।
इत्येवमविधेयात्मा ध्येयः स्याद्धर्मवित्तमैः ॥ २१ ॥

सती कीर्तिस्त्ववितथा यस्यासौ सकलेश्वरः ।
सत्कीर्तिः स्यात्तथा चाग्ने यशस्विन् यशसाश्रुतेः ॥ २२ ॥

करामलकवत्सर्वं साक्षात्कृतवतो हरेः ।
न क्वापि संशयोऽस्तीति स प्रोक्तश्छिन्नसंशयः ॥ २३ ॥

उदीर्णः सर्वभूतेभ्यस्समुद्रिक्ततया हरिः ।
उदीर्णाय नमस्तस्मै पूर्णाय परमात्मने ॥ २४ ॥

श्रीविष्णुः सर्वतः सर्वं स्वचैतन्येन पश्यति ।
इत्ययं सर्वतश्चक्षुर्विश्वतश्चक्षुरागमात् ॥ २५ ॥

ईशो न विद्यते यस्य सोऽनीशः श्रीजनार्दनः ।
न तस्येशः कश्चनेति श्रुतिस्मृत्यनुशासनात् ॥ २६ ॥

क्वचिन्न विक्रियामेति हरिः शश्वद्भवन्नपि ।
शाश्वतस्थिर इत्येकं नाम शाश्वतिकश्रुतेः ॥ २७ ॥

लङ्कामार्गान्वेषणार्थं यः सागरमुपागतः ।
रामो भूमौ शेत इति भूशयः समुदाहृतः ॥ २८ ॥

स्वेच्छावतारैर्बहुभिर्भूषयन् यो वसुन्धराम् ।
भूषणस्तेन भगवान् सर्वभूषणभूषणः ॥ २९ ॥

भूतिर्हि भवनं सत्ता विभूतिर्वार्थकारणात् ।
स च सर्वविभूतीनामिति भूतिर्हरिः स्वयम् ॥ ३० ॥

शोकोऽस्य परमानन्दरूपत्वाद्विगतो यतः ।
विशोकस्तेन निर्दिष्टो विशोकः परमः स्मृतेः ॥ ३१ ॥

**स शोकनाशनो** देवो भक्तानां शोकनाशनात् ।
तथा चोक्तं तरति शोकमात्मविदिति श्रुतेः ॥ ३२ ॥

अर्चिष्मन्तो यदीयेन चन्द्रसूर्यादयोऽर्चिषा ।
ततोऽ**र्चिष्मान्** श्रुतिस्तत्र विश्वार्चिर्विश्वतोमुखः ॥ ३३ ॥

लोकार्चितैर्विरिञ्च्याद्यैरार्चितो **ह्यर्चितो** हरिः ।
ऋक्शाखायां श्रूयतेऽत्र तथार्चन्त्यर्कमर्किणः ॥ ३४ ॥

**कुम्भः** कुम्भपतिर्यद्वा यस्मिन् सर्वं प्रतिष्ठितम् ।
तथा नमः कुलालेभ्यः कर्मारेभ्य इति श्रुतेः ॥ ३५ ॥

विशुद्ध आत्मा यस्येति गुणातीततया हरिः ।
**विशुद्धात्मे**ति विख्यातो विशुद्धा[1]त्मभिरच्युतः ॥ ३६ ॥

स्मृतिमात्रेण पापानां क्षपणात् स **विशोधनः** ।
विशोधयति पापानि लोकानामिति च स्मृतेः ॥ ३७ ॥

अनिरुद्धोऽप्यन्यतमश्चतुर्व्यूहेषु दृश्यते ।
इति कृत्वाऽ**निरुद्धो**ऽयं पायात्सर्वनिरोधतः ॥ ३८ ॥

विष्णुरेवा**प्रतिरथः** प्रतिपक्षो यतो न हि ।
तथा चैवाप्रतिरथमपश्यन्तेति वै श्रुतेः ॥ ३९ ॥

द्युम्नं प्रकृष्टं द्रविणं विद्यते यस्य सोऽच्युतः ।
**प्रद्युम्न** इति विख्यातः प्रद्युम्नाय नमो नमः ॥ ४० ॥

अमितो विक्रमो यस्य स स्याद**मितविक्रमः** ।
तथा विष्णोर्नुकं वीर्याणि प्रवोचमिति श्रुतेः ॥ ४१ ॥

निजघान महाविष्णुरसुरं कालनेमिनम् ।
विख्यातस्तेन लोकेऽस्मिन् **कालनेमिनिहा**भिधः ॥ ४२ ॥

---

[1] त्माभिरुच्यते—क.

विष्णुर्वीर इति प्रोक्तः सोऽयं शूरतमत्वतः ।
[1]गाहमानो दायो वीरः शतमन्युरिति श्रुतेः ॥ ४३ ॥

शौरिः शूरकुलोत्पन्नो बलभद्रः स्वयं हरिः ।
अतोऽष्टमोऽवतारोऽयमित्यूचुः पूर्वसूरयः ॥ ४४ ॥

इन्द्रप्रमुखवीराणां जनानामयमीश्वरः ।
स शौर्यातिशयेनोक्तो हरिः शूरजनेश्वरः ॥ ४५ ॥

त्रिलोकात्मा त्रयो लोका भिद्यन्तेऽस्मान्न वस्तुतः ।
यद्वा त्रयाणां लोकानामन्तर्यामितया हरिः ॥ ४६ ॥

[2]त्रयो लोकास्तदाज्ञप्ताः स्वेषु स्वेषु च कर्मसु ।
वर्तन्त इत्ययं विष्णुस्त्रिलोकेशो बुधोदितः ॥ ४७ ॥

[3]केशाख्या रश्मयः सौरा ब्रह्मविष्ण्वीशशक्तयः ।
एवं पुराणवचनाच्चद्वत्त्वेनापि केशवः ॥ ४८ ॥

असुरं केशिनामानं हतवानिति केशिहा ।
पाराशर्यवचस्तद्वद्धन्ता केशिनमाहवे ॥ ४९ ॥

हरिर्हरति पापं नः संसारावासहेतुकम् ।
तथा च स्मृतयो बह्व्यः संसारहरणाद्धरिः ॥ ५० ॥

वाञ्छाद्भिरिह धर्मादिपुरुषार्थचतुष्टयम् ।
काम्यते कामदेवोऽयं पदयोः कर्मधारयात् ॥ ५१ ॥

---

[1] गायमानोदयो—क. ख. ग.

[2] यदाज्ञया त्रयो लोका वर्तन्ते त्रिषु वर्त्मसु ।
स मुकुन्दस्त्रिलोकेश इति योगिभिरीरितः ॥ क.

[3] महेशौ हि सुतौ यस्य केशवः स हि कीर्तितः ।
क इति ब्रह्मणो नामेत्यादिपद्मपुराणवाक् ॥ क.

**कामपालः** कामवतां कामान् पालयतीति वा ।
कामानामस्मदीयानां गोपालः पालकोऽस्तु सः ॥ ५२ ॥

कामोऽस्यास्तीति वा **कामो** पूर्णकामतयापि च ।
तथा च श्रूयते सोऽकामयतेति च याजुषी ॥ ५३ ॥

[1] द्विपरार्धस्यावसाने कस्य कञ्जासनस्य हि ।
अन्तो यस्मादतः **कान्तो** मह्यं कान्तिं प्रयच्छतु ॥ ५४ ॥

आगमाश्च कृता येन श्रुतिस्मृत्यादिलक्षणाः ।
स **कृतागम** इत्युक्तस्तन्मानं स्मृतिसंस्फुटम् ॥ ५५ ॥

इदं तदीयमेवेति निर्देष्टुं यन्न शक्यते ।
**अनिर्देश्यवपु**स्तस्माद्गुणातीतः स्वरूपतः ॥ ५६ ॥

[2] व्याप्य मे रोदसी सर्वं कान्तिरभ्यधिका स्थिता ।
विष्णुरित्यादिकं प्रोक्तं भारते **विष्णु**रित्यतः ॥ ५७ ॥

वा गतौ प्रजने कान्तावसने खादनेऽपि च ।
धातुपाठोक्तरीत्यैवं **वीरो** गत्यादिमत्त्वतः ॥ ५८ ॥

[3] नान्तं गुणानां गच्छन्ति तेना**नन्तो**ऽयमव्ययः ।
इति विष्णुपुराणोक्तेरनन्तो वान्तवर्जनात् ॥ ५९ ॥

विष्णु**र्धनञ्जयो** यस्माद्धनं दिग्विजये जयन् ।
तथा च भगवानूचे पाण्डवानां धनञ्जयः ॥ ६० ॥

तपो वेदश्च जातिश्च ज्ञानं च ब्रह्मसंज्ञितम् ।
तेभ्यो हितत्वा**द्ब्रह्मण्यो** निरुक्तिः स्मृतिदर्शिता ॥ ६१ ॥

---

[1] द्विपरार्धावसाने यः—क. [2] रोदसीकुहराद्व्याप्य का—क. [3] अन्तं गुणा न गच्छन्ति तेना—क.

तपोवेदादिकं सर्वं पूर्वोक्तं ब्रह्मसंज्ञितम् ।
तत्करोतीत्ययं विष्णुर्ब्रह्मकृत्स बुधैर्मतः ॥ ६२ ॥

ब्रह्मनामा जगत्सर्वं सृजतीति स्वयं हरिः ।
तथोपनिषदि ब्रह्मा देवानां पदवीरिति ॥ ६३ ॥

बृहत्त्वाद्बृंहणत्वाच्च ब्रह्म श्रुत्यादिलक्षणम् ।
सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिशासनात् ॥ ६४ ॥

तपोवेदादि पूर्वोक्तं सर्वं वर्धयती[1]त्यतः ।
मुनिभिः [2]कथितो विष्णुरयं **ब्रह्मविवर्धनः** ॥ ६५ ॥

विन्दते वेत्ति वा वेदं वेदार्थं **ब्रह्मवित्तमः** ।
वेदान्तकृद्वेदविदेव चाहमिति च स्मृतेः ॥ ६६ ॥

ब्रह्मात्मना तु वेदस्य सर्वेषां ब्राह्मणात्मना ।
कुर्वन् प्रवचनं विष्णुर्**ब्राह्मणो** ब्राह्मणोदितः ॥ ६७ ॥

तपोवेदादयः सर्वे ब्रह्मशब्देन ये मताः ।
[3]तच्छेषभूतास्ते सर्वे **ब्रह्मी** तद्वत्तया हरिः ॥ ६८ ॥

सर्ववेदान् स्वात्मभूतान् जानातीति जनार्दनः ।
त्र्य्येव विद्या तपति श्रुत्या **ब्रह्मज्ञ** ईश्वरः ॥ ६९ ॥

ब्राह्मणा वा प्रिया यस्य ब्राह्मणानां प्रियोऽथवा ।
**ब्राह्मणप्रिय** इत्युक्तः स मे ब्रह्म प्रयच्छतु ॥ ७० ॥

महान्तः पादविक्षेपाः [4]क्रमा यस्य स वामनः ।
**महाक्रमः** श्रुतिस्तत्र शं नो विष्णुरुरुक्रमः ॥ ७१ ॥

महद्धि विश्वोत्पत्त्यादिकर्मास्य स जगत्प्रभुः ।
**महाकर्मा** श्रुतिस्तत्र विष्णोः कर्माणि पश्यत ॥ ७२ ॥

---

[1] त्ययम्–ग. [2] कथितो–ग. [3] तच्छब्दभूतास्ते–ख. ग. [4] क्रमादस्य–ग.

महदस्य भवेत्तेजो **महातेजा**स्ततो हरिः ।
येन सूर्यस्तपति तेजसेद्ध इति च श्रुतेः ॥ ७३ ॥

**महोरगो** महांश्चासावुरगश्चेति विग्रहात् ।
गीतायां स्मर्यते तद्वत्सर्पाणामस्मि वासुकिः ॥ ७४ ॥

महांश्चासौ क्रतुश्चेति **महाक्रतु**रधोक्षजः ।
श्रुतेः सोऽपि स एवेति श्रुतिश्च क्रतुराडिति ॥ ७५ ॥

लोकसङ्ग्रहणार्थं हि यज्ञान्निर्वर्तयन् हरिः ।
महांश्चासौ तथा यज्वा **महायज्वा** पुनातु माम् ॥ ७६ ॥

**महायज्ञो** बहुव्री[1]हिरथवा कर्मधारयः ।
यज्ञानां जपयज्ञोऽस्मीत्येवं भगवतो वचः ॥ ७७ ॥

ब्रह्मात्मनि जगत्सर्वं हूयते च तदात्मना ।
महच्च तद्धविश्चाथ बहुव्रीहिर्**महाहविः** ॥ ७८ ॥

ससुरासुरगन्धर्वसयक्षोरगराक्षसैः ।
स्तूयते ह्ययमेवेति तेन **स्तव्य** इति स्मृतः ॥ ७९ ॥

वेदेषु च पुराणेषु ब्रह्माद्यैश्च तथापरैः ।
कृतं च स्तवराजादि तत्प्रियत्वात् **स्तवप्रियः** ॥ ८० ॥

स्तूयते येन तत्स्तोत्रं गुणसङ्कीर्तनात्मकम् ।
तत्सर्वं हरिरेवेति विष्णुः **स्तोत्रा**भिधो मतः ॥ ८१ ॥

**स्तुतिः** स्तवक्रिया विष्णुर्यतः सर्वात्मकः स्मृतः ।
कर्ता कर्म क्रिया चेति तत्सर्वं विष्णुरेव हि ॥ ८२ ॥

क्रियामात्रस्य कर्तृत्वाद्विष्णुः **स्तोतेति** गीयते ।
स्तोता वो अमृतः स्यादित्येवं भगवती श्रुतिः ॥ ८३ ॥

---

[1] हिर्यद्वा—ग, ?

महायुधानि पञ्चापि धत्ते लोकैकरक्षकः ।
अतो रणं प्रियो यस्य स विष्णुः स्याद्रणप्रियः ॥ ८४ ॥

पूर्णः स्यात्सर्वकामैश्च सम्पन्नः सर्वशक्तिभिः ।
श्रुतिश्च पूर्णमसि पूर्णं मे भूयादितीष्यते ॥ ८५ ॥

स्वयं पूर्णोऽपि [1]सम्पद्भिर्विष्णुः पूरयिता नृणाम् ।
उक्तं महाभारतेऽपि देवः पूरितपूरकः ॥ ८६ ॥

स्मृतिमात्रेण पापानि नाशयत्यच्युतो नृणाम् ।
तेन पुण्याभिधो विष्णुः पुण्यवन्तं करोतु माम् ॥ ८७ ॥

कीर्तिरस्य यतः पुण्या पुण्यकीर्तिरतो हरिः ।
तदाह भगवान् व्यासः पुण्यश्रवणकीर्तनः ॥ ८८ ॥

कर्मजैरामयैर्बाह्यैरान्तरैराधिभिर्हरिः ।
न पीड्यतेऽयं शुद्धत्वादिति विष्णुरनामयः ॥ ८९ ॥

मनसो हि जवो वेग इव वेगो हि चक्रिणः ।
अस्य सर्वगतत्वेन विष्णुः प्रोक्तो मनोजवः ॥ ९० ॥

यश्चतुर्दशविद्यानां कलानामपि केशवः ।
प्रणेता च प्रवक्ता च तेन तीर्थकरो गुरुः ॥ ९१ ॥

वसुरेता वसु स्वर्णं रेतोऽस्येति तथा स्मृतिः ।
तदण्डमभवद्धैमं यद्रेतो जलमध्यगम् ॥ ९२ ॥

धनं वसु प्रकर्षेण ददातीति वसुप्रदः ।
अयं साक्षाद्धनाध्यक्षस्तत्प्रसादादथेतरः ॥ ९३ ॥

वसु प्रकृष्टं मोक्षाख्यं फलं विष्णुः कृपाकरः ।
भक्तेभ्यः प्रददातीति तस्य नाम वसुप्रदः ॥ ९४ ॥

---

[1] कामानां—क.

अपत्यं वसुदेवस्य वासुदेवः पुमानयम् ।
वसुदेवसुतं देवमित्यादिस्मृतिसङ्ग्रहात् ॥ ९५ ॥

स्वरूपमात्मनो वस्ते मायया छादयत्ययम् ।
वस आच्छादने धातोरुन्नन्तत्वाद्वसुर्हरिः ॥ ९६ ॥

वसतीति वसु प्रोक्तं विषयेष्वविशेषतः ।
हृङ्मनोऽस्येति वै विष्णुर्देवो वसुमनाः स्मृतः ॥ ९७ ॥

ब्रह्मार्पणं ब्रह्म हविरित्यादिभगवद्वचः ।
गीतासु स्पष्टमेवास्ति तेन नारायणो हविः ॥ ९८ ॥

अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ।
इति श्रुत्युक्तसद्भिर्यः प्राप्यते यैः स सद्गतिः ॥ ९९ ॥

कृतिः सती समीचीना विश्वोत्पत्त्यादिलक्षणा ।
कार्यं यत्राथवा यस्य यस्माद्वा तेन सत्कृतिः ॥ १०० ॥

श्रीमद्विट्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे जातं शतं सप्तमम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता तु श्रीवत्सवक्षःसंज्ञकमञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्मप्रसूनाञ्जलौ
श्रीवत्सवक्षोमञ्जरी समाप्ता ।

---

# सत्तामञ्जरी

---

सजातीयविजातीयभेदभावविवर्जिता ।
यानुभूतिः सैव **सत्ता** एकमेवेति च श्रुतेः ॥ १ ॥

सर्वात्मत्वाद्भासमानतया **सद्भूति**रुच्यते ।
बाधो हि श्रुतियुक्तिभ्यामात्मनोऽन्यस्य वस्तुतः ॥ २ ॥

सतां [1] तत्त्वविदां विष्णुः प्रकृष्टमयनं यतः ।
ततोऽयं सर्वमुनिभिः सम्प्रोक्तः **सत्परायणः** ॥ ३ ॥

[2] सा शूरसेना यस्यां तु शूरा हनुमदादयः ।
सा यस्यास्तीत्यसौ **शूरसेनः** सेनां ममावतु ॥ ४ ॥

आदेशश्च प्रशस्तस्य तस्येष्ठनि परे स्थिते ।
श्रेष्ठो यदूनां प्राधान्याद्**यदुश्रेष्ठः** स उच्यते ॥ ५ ॥

सतां हि विदुषां विष्णुर्निवासः स्यात्समाश्रयः ।
तेनोक्तः **सन्निवासो**ऽयं सन्निवासं ददातु नः ॥ ६ ॥

यमुनासम्बन्धिनो ये यामुनाः प्राणिनः स्मृताः ।
शोभनाः परिवेष्टारस्ते यस्यासौ **सुयामुनः** ॥ ७ ॥

भूतान्यत्र वसन्तीति **भूतावास**स्तथा स्मृतिः ।
[3] वसन्ति त्वयि भूतानि भूतावासस्ततो भवान् ॥ ८ ॥

[4] वासुराच्छादयति यो जगद्विष्णुः स्वमायया ।
वासुश्चासौ तथा देवो **वासुदेवो**ऽस्तु नो मुदे ॥ ९ ॥

---

[1] सप्तविदां-क. [2] स्याच्छूर-क. [3] वसन्त्यत्रैव भूतानि-क. [4] देवासुरेभ्यो वस्ते यो-क.

सर्व एवासवः प्राणा यस्मिन् जीवात्मकेऽव्यये ।
निलीयन्त [1] इतीहासौ **सर्वासुनिलयो** हरिः ॥ १० ॥

नैवालमिति पर्याप्तिर्विद्यते यस्य सम्पदाम् ।
**अनलाख्यो** हरिस्तेन दुरितं मे व्यपोहतु ॥ ११ ॥

[2] सदा श्रुत्युक्तसद्धर्मविरुद्धे पथि तिष्ठताम् ।
दर्पं हन्तीत्यसौ देवो **दर्पहा** मधुसूदनः ॥ १२ ॥

श्रुत्युक्ते वर्तमानानां [3] धर्मे वर्त्मनि धर्मवित् ।
दर्पं गर्वं ददातीति **दर्पदो** भक्तवत्सलः ॥ १३ ॥

स्वात्मामृतरसास्वादसम्यक्प्रमुदितो हरिः ।
**दृप्तस्**तेनोच्यते श्रीमद्व्यासेनाशेषदर्शिना ॥ १४ ॥

दुःखेन धार्यते जन्मसहस्राभ्यासयोगतः ।
क्लेशोऽधिकरतस्तेषामिति मानेन **दुर्धरः** ॥ १५ ॥

नान्तरैरपि रागाद्यैर्बाह्यैरथ च शत्रुभिः ।
पराजितः पराभूत इति देवो**ऽपराजितः** ॥ १६ ॥

[4] विश्वं हि मूर्तिरस्येति **विश्वमूर्ति**स्तदैक्यतः ।
तथा च विश्वमेवेदं पुरुषस्तदिति श्रुतेः ॥ १७ ॥

महती मूर्तिरस्यैव शेषपर्यङ्कशायिनः ।
विराण्मूर्तितया वैष **महामूर्ति**र्महातनुः ॥ १८ ॥

यस्य ज्ञानमयी मूर्तिस्तैजसी स्वेच्छयाऽथवा ।
इत्ययं **दीप्तमूर्तिः** स्याद्देवो नारायणो हरिः ॥ १९ ॥

पञ्चभूतात्मिका यस्य हरेः कर्मनिबन्धिनी ।
मूर्तिर्न विद्यते यस्मात्तस्माद्विष्णु**रमूर्तिमान्** ॥ २० ॥

---

[1] इतीवासौ—ग ? [2] तथा-क. [3] धर्मवर्त्मनि वर्त्मविद्—ग. [4] विश्वापि मू—ग.

स्वेच्छाकृतावतारेषु लोकनामुपकारिणीः ।
बह्वीर्मूर्तीर्भजत इत्येतस्याऽनेकमूर्तिता ॥ २१ ॥

न व्यज्यतेऽयमीदृक् स्यादित्यव्यक्तस्ततः स्मृतः ।
अव्यक्तः पुरुषः साक्षीत्येवमादिस्मृतेर्वचः ॥ २२ ॥

नानाविकल्प[1]ज्ञानस्य मूर्तयः संविदाकृतेः ।
सन्तीति शतमूर्तिः स्यान्नमो वै शतमूर्तये ॥ २३ ॥

यतो विश्वादिमूर्तित्वमस्योक्तं पूर्वनामभिः ।
आननानि शतं यस्य स गोपालः शताननः ॥ २४ ॥

यस्मिन्नेव सजातीयविजातीयभिदा न हि ।
एको देवः सर्वभूतेषु गूढ इति च श्रुतौ ॥ २५ ॥

मायया बहुरूपत्वान्नैको विष्णुस्तथा श्रुतिः ।
इन्द्रो मायाभिरित्याद्या रूपं रूपं प्रतीत्यपि ॥ २६ ॥

सोऽध्वरः सव इत्युक्तः सोमो यत्राभिषूयते ।
तदध्वरस्वरूपत्वात्सव इत्युच्यते हरिः ॥ २७ ॥

क इत्युक्तो हरिः साक्षात्कशब्दः सुखवाचकः ।
सदा चित्सुखरूपत्वात्कं ब्रह्मेति श्रुतेरपि ॥ २८ ॥

स सर्वपुरुषार्थैकरूपत्वादखिलागमैः ।
ब्रह्मैव तद्विचार्यः स्यात्तेन किं ब्रह्म बोध्यते ॥ २९ ॥

यच्छब्देन स्वतः सिद्धवस्तूद्देश्यप्रवाचिना ।
ब्रह्म निर्दिश्यत इति यदपि ब्रह्म कथ्यते ॥ ३० ॥

तनोतीति च तद्ब्रह्म तथा गीतासु गीयते ।
ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥ ३१ ॥

---

[1] ज्ञानस्य-ग. ?

यस्मादप्युत्तमं नास्ति पद्यते च मुमुक्षुभिः ।
नामैकमेतद्वि[1]पदमुक्तं **पदमनुत्तमम्** ॥ ३२ ॥

आधारभूतेऽस्मिन् लोका बध्यन्ते वाथ बन्धुवत् ।
हितोपदेष्टा लोकानां **लोकबन्धुस्**तथा हरिः ॥ ३३ ॥

**लोकनाथः** सर्वलोकैर्नाथ्यते याच्यते यतः ।
तथा च स्मर्यते पाद्मे लोकनाथ ! नमोऽस्तु ते ॥ ३४ ॥

**माधवो**ऽयं मधुकुले जातत्वाज्जगदीश्वरः ।
तथा पुराणवचनं माधवानन्त ! केशव ! ॥ ३५ ॥

निजभक्तेषु चात्यन्त[2]स्नेहवान् **भक्तवत्सलः** ।
तथोक्तं भक्तवात्सल्य[3]हेतुः कंसान्तकोऽस्तु नः ॥ ३६ ॥

**सुवर्णवर्ण**स्तद्वण इव वर्णोऽस्य सोऽच्युतः ।
हिरण्यवर्णमभयं कृष्णोक्तिरपि याजुषी ॥ ३७ ॥

हेमेवाङ्गं वपुर्यस्य सोऽयं **हेमाङ्ग** उच्यते ।
[4]श्रुतिर्य एषोऽन्तरादित्ये हिरण्मय इत्यपि ॥ ३८ ॥

वराण्यङ्गानि यस्य स्युः शोभनानि मुरद्विषः ।
स **वराङ्ग** इति प्रोक्तः स वरं नः प्रयच्छतु ॥ ३९ ॥

[5]आह्लादकैश्चन्दनैश्च योऽङ्गदैर्भूषितस्ततः ।
**चन्दनाङ्गदवान्** सोऽयं श्रीहरिश्चन्दनाङ्गदी ॥ ४० ॥

धर्मत्राणार्थमसुरान् वीरान् हन्तीति **वीरहा** ।
स मद्वीरांश्च मामव्याद्भूपान्यत्परवीरहा ॥ ४१ ॥

समो न विद्यते सर्वविलक्षणतया हरेः ।
यस्यासौ **विषमः** सोऽव्याद्विषमेषु पिता प्रभुः ॥ ४२ ॥

---

[1] पदं विष्णुः पद—ग. [2] मोदवान्—क. [3] हेतुनैव कौतुकम्—ग ?
[4] श्रुतेर्य—ग. [5] आह्लादनैः—ग.

यतस्सर्वेश्वरः सर्वविशेषैरिह वर्जितः ।
ततः स **शून्यवच्छून्यः** कोऽन्यो [1] मान्यस्ततोऽस्ति नः ॥४३॥

आशिषः प्रार्थना यस्य घृता विगलिता इति ।
**घृताशीस्**तेन विश्वेशः सर्वाशापरिपूरकः ॥ ४४ ॥

न स्वरूपान्न सामर्थ्यान्न च ज्ञानादिकाद्गुणात् ।
चलनं विद्यते यस्येत्य**चलः** कीर्तितोऽच्युतः ॥ ४५ ॥

[2] पवमानस्वरूपेण सर्वदा चलतीत्ययम् ।
तेनासौ **चल** इत्युक्तः स चलाचलचालकः ॥ ४६ ॥

अनात्मवस्तुष्वात्माभिमानो यस्य न विद्यते ।
**अमानी** तेन गोपालः [3] स्वच्छसंवेदनाकृतिः ॥ ४७ ॥

अनात्मभूतेष्वात्माभिमानं खण्डयतीत्यसौ ।
स्वभक्तानामभक्तानां ददातीत्यपि **मानदः** ॥ ४८ ॥

सर्वेश्वरत्वात्सर्वैश्च ससुरासुरमानवैः ।
माननीयः पूजनीयस्तेन **मान्यो** महागुरुः ॥ ४९ ॥

चतुर्दशानां लोकानामीश्वरत्वाज्जगत्पतिः ।
**लोकस्वामी** सर्वलोकैरुच्यते [4] तन्त्रकोविदैः ॥ ५० ॥

विष्णु**स्त्रिलोकधृङ्**नाम्ना त्रीन् लोकानपि धारयन् ।
त्रिलोकान् व्याप्य भूतात्मा भुङ्क्त इत्यादिकस्मृतेः ॥ ५१ ॥

**सुमेधाः** शोभना मेधा प्रज्ञा यस्येत्यसौ हरिः ।
समासान्तोऽनित्यमसिच्[5]प्रत्ययः परिकीर्तितः ॥ ५२ ॥

मेधे यज्ञे वराहोऽपि तथा सप्तर्षयोऽभवन् ।
इति पौराणिकी गाथा तेनायं **मेधजो** हरिः ॥ ५३ ॥

---

[1] मानस्त—**ख.** [2] पवमानस्य रूपेण—**क.** [3] स च सं—**क.** [4] तत्त्वकोविदैः—**ख. ग.** [5] प्रत्ययान्त उदाहृतः—**क.**

सर्वथा सर्वभावेषु कृतार्थत्वाद्रमापतिः ।
**धन्य** इत्युच्यते विष्णुरनपेततया धनात् ॥ ५४ ॥

सत्या ह्यवितथा मेधा प्रज्ञा यस्येत्यसौ हरिः ।
**सत्यमेधा** धृतिस्तद्वत्सत्यप्रज्ञाय ते नमः ॥ ५५ ॥

[1] अंशैरशेषैः शेषाद्यैरशेषां धारयन् धराम् ।
**धराधराभिधो** विष्णुर्धराधरधरोऽप्यसौ ॥ ५६ ॥

सर्वदा तेजसा भासा सूर्यरूपेण वर्षणात् ।
**तेजोवृष**स्तथा प्रोक्तः सूर्यो वर्षति तेजसा ॥ ५७ ॥

द्युतिमङ्गगतां कान्तिं धारयन् परमेश्वरः ।
विष्णुर्**द्युतिधरः** प्रोक्तो द्युतिमन्तमुपास्महे ॥ ५८ ॥

सर्वे च ते शस्त्रभृतः शूरा भीष्मार्जुनादयः ।
तेषां शस्त्रभृतां श्रेष्ठः **सर्वशस्त्रभृतां वरः** ॥ ५९ ॥

पत्रं पुष्पं फलं तोयं भक्तैरुपहृतं च यत् ।
गृह्णातीति प्रकर्षेण **प्रग्रहः** परमेश्वरः ॥ ६० ॥

स्ववशेन जगत्सर्वं निगृह्णातीति **निग्रहः** ।
मन्मनोनिग्रहं कुर्याद्धित्वा बुद्धिं दुराग्रहम् ॥ ६१ ॥

अग्रमन्तो विनाशोऽस्य जगतो **व्यग्र** उच्यते ।
भक्तानुग्रहकार्येषु व्यग्रो वा करुणानिधिः ॥ ६२ ॥

यद्वेदोक्तश्चतुश्शृङ्गो न चैकं [2]शृङ्गमस्य वै ।
चत्वारि शृङ्गेतिमन्त्रा**न्नैकशृङ्गा**भिधः शिवः ॥ ६३ ॥

[3]वासुदेवस्यावरजः कश्चिदासीद्गदाभिधः ।
तदग्रे जायत इति गोविन्दः स्या**द्गदाग्रजः** ॥ ६४ ॥

---

[1] अङ्गैर–क. [2] शृङ्गवांश्च यः–ग. [3] वासुदेवादवरजः–ग.

चतस्रो मूर्तयो यस्य * विराडव्याकृताभिधा ।
सूत्रात्माख्या तुरीया च स **चतुर्मूर्तिः**रुच्यते ॥ ६५ ॥

चतुर्बाहुरिदं नाम रूढं श्रीदेवकीसुते ।
चत्वारो बाहवो यस्य स **चतुर्बाहु**रुच्यते ॥ ६६ ॥

शरीरपुरुषः छन्दःपुरुषो वेदपूरुषः ।
महापुरुष इत्येवं **चतुर्व्यूहो**ऽत्र बह्वृचः ॥ ६७ ॥

चतुर्णामाश्रमाणां वा वर्णानां वाधिकारिणाम् ।
गतिः प्राप्यस्थानतया **चतुर्गति**रधोक्षजः ॥ ६८ ॥

**चतुरात्मा**स्य चतुरं मनो रागादिवर्जितम् ।
यद्वा मनोबुद्धिचित्ताहङ्कारा इति वै तथा ॥ ६९ ॥

धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयम् ।
**चतुर्भावो** हि यस्माच्च तद्भवत्युपपद्यते ॥ ७० ॥

ऋग्यजुस्सामवेदानां तथैवाथर्वणस्य च ।
यथावदर्थं वेत्तीति **चतुर्वेदविदी**श्वरः ॥ ७१ ॥

पादोऽस्य विश्वा भूतानीत्येकांशेन स्थितो जगत् ।
श्रुत्या स्मृत्या च यस्यैकः पाद इत्ये**कपाद**यम् ॥ ७२ ॥

संसारचक्रं यः सम्यगावर्तयति योगिराट् ।
भगवान् स **समावर्तः** कृष्णद्वैपायनोदितः ॥ ७३ ॥

निवृत्तो [1] न कुतोऽप्यात्मा यस्य सोऽयं निरन्तरम् ।
सर्वत्र वर्तमानश्चा**निवृत्तात्मा** निरञ्जनः ॥ ७४ ॥

महासमर्थैरपि च देवदानवराक्षसैः ।
जेतुं न शक्यते विष्णुर्यस्मात्तस्मात्स **दुर्जयः** ॥ ७५ ॥

---

* विराडिति भिन्नं पदम्..  [1] रहितो ह्यात्मा—क.

यस्याज्ञां भयहेतुत्वान्नातिक्रामन्ति जन्तवः ।
**दुरतिक्रम** इत्येनं प्रणमामि पुनः पुनः ॥ ७६ ॥

हरिर्भक्त्यैकलभ्यत्वाद्**दुर्लभः** सर्वसाधनैः ।
भक्त्या लभ्य इति स्मृत्या दुर्लभो विष्णुरित्यपि ॥ ७७ ॥

[1] नानाकर्मकलापैश्च चित्तशोधनपूर्वकम् ।
दुःखेन गम्यते देवो ज्ञायते तेन **दुर्गमः** ॥ ७८ ॥

अन्तरायप्रतिहतैर्जनैर्दुःखादवाप्यते ।
इति दामोदरो **दुर्गो** दुर्गतिं हरतान्मम ॥ ७९ ॥

[2] दुःखेनावास्यते चित्ते समाधौ सर्वयोगिभिः ।
चित्तवृत्तिनिरोधेन **दुरावासो** मुरान्तकः ॥ ८० ॥

दुर्मार्गगामिनो देववैरिणो दानवादयः ।
दुरारयस्ते निर्दिष्टास्तान् हन्तीति **दुरारिहा** ॥ ८१ ॥

ध्येयत्वाच्छोभनैरङ्गैः **शुभाङ्गो** मङ्गलात्मकः ।
सर्वाङ्गसुन्दरं हृद्यमिति भागवतोदितम् ॥ ८२ ॥

सारं यत्सर्वलोकानां तद्गृह्णातीति केशवः ।
साधुः पृषोदरादित्वा**ल्लोकसारङ्ग**संज्ञकः ॥ ८३ ॥

सु शोभनो हि विस्तीर्णः प्रपञ्चस्तन्तुरुच्यते ।
बहुव्रीहिसमासोक्त्या **सुतन्तु**स्तन्तुदोऽस्तु नः ॥ ८४ ॥

प्रपञ्चरूपं तं तन्तुं विष्णुर्वर्धयतीति च ।
अथवा छेदयत्येवं स प्रोक्त**स्तन्तुवर्धनः** ॥ ८५ ॥

इन्द्रस्य [3] कर्मेवास्यापि कर्मैश्वर्यादिलक्षणम् ।
इती**न्द्रकर्मा** सोऽस्माकं प्रयच्छतु परां गतिम् ॥ ८६ ॥

---

[1] नानारत्नक—**क.** ?  [2] दुःखेनावाप्यते–**ग.**  [3] कर्मैवदस्यापि—**ग.**

कर्माणि खलु कार्याणि वियदादीनि यस्य वै ।
महान्ति स **महाकर्मा** सत्कर्ममतिदोऽस्तु मे ॥ ८७ ॥

कृतमेव न कर्तव्यं किञ्चित्कर्मास्य विद्यते ।
**कृतकर्माथ** कृतवान् कर्म धर्मात्मकं हरिः ॥ ८८ ॥

वेदात्मकागमो येन कृतः स्यात्स **कृतागमः** ।
यदस्य महतो भूतस्येत्यादिश्रुतिशासनम् ॥ ८९ ॥

यदस्य भवमुत्कृष्टं जन्म स्वेच्छासमाश्रितम् ।
यद्वोद्गतश्चापगतो भवो जन्मास्य चो**द्भवः** ॥ ९० ॥

विश्वाति[1]शायिसौभाग्यशालित्वाज्जगदीश्वरः ।
**सुन्दरस्**स्मृतिवाक्तत्र सुन्दरं सुखमन्दिरम् ॥ ९१ ॥

**सुन्दः** पृषोदरादित्वात्सुन्द इत्यार्द्रवाचकः ।
धातुरुन्दी क्लेदने स्यात्कृपाब्धिरिति लक्ष्यते ॥ ९२ ॥

रत्नशब्देन शोभात्र लक्ष्यते रत्नवद्धरेः ।
सुन्दरा नाभिरस्येति **रत्ननाभो** जगत्प्रभुः ॥ ९३ ॥

सु शोभनं लोचनं हि ज्ञानं वा नयनं हरेः ।
यस्यासौ कीर्तितो देवो महाविष्णुः **सुलोचनः** ॥ ९४ ॥

**अर्को**ऽयऽमर्चनीयत्वाद्ब्रह्माद्यैर्दैवतोत्तमैः ।
तथा च श्रूयते गायत्रिणोऽर्चन्त्यर्कमर्किणः ॥ ९५ ॥

अर्थिभ्यो निजभक्तेभ्यो वाजमन्नं सनोति हि ।
ददातीति हृषीकेशो बुधै**र्वाजसनः** स्मृतः ॥ ९६ ॥

ततोऽयं **शृङ्गवान् शृङ्गी** भगवान् प्रलयाम्भसि ।
विष्णुर्मत्स्यविशेषस्य रूपं धृत्वा चचार यत् ॥ ९७ ॥

---

[1] शयसौ—**ग.**

जयत्यतिशयेनायं सर्वदा सकलान् रिपून् ।
इति हेतोर्जयन्तो वा जयहेतुर्जनार्दनः ॥ ९८ ॥

सर्ववित्सर्वविषयजयित्वाज्जयवान् जयी ।
नामैकं सर्वविच्चासौ जयीदं सर्वविज्जयी ॥ ९९ ॥

बिन्दवोऽवयवा यस्य सुवर्णसदृशा हि सः ।
सुवर्णबिन्दुरथवा मन्त्रात्मावयवार्थतः ॥ १०० ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे जातं शतं चाष्टमम् ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा शुद्धा सत्ताख्यमञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्यप्रसूनाञ्जलौ सत्तामञ्जरी समाप्ता ।

---

# अक्षोभ्यमञ्जरी

---

देवो न क्षोभ्यत इति शब्दादिविषयैरपि ।
रागद्वेषादिभिर्विष्णुरक्षोभ्यो देववैरिभिः ॥ १ ॥

वागीश्वराणां सर्वेषां ब्रह्मादीनामपीश्वरः ।
तस्मान्नारायणो देवः सर्ववागीश्वरेश्वरः ॥ २ ॥

महाह्रदस्सदानन्दो महान् ह्रद इव स्थितः ।
अवगाह्य सदानन्दं योगिनः सुखमासते ॥ ३ ॥

मायागर्भवदस्यापि महती तु दुरत्यया ।
महागर्तः स्मृतिस्तत्र मम माया दुरत्यया ॥ ४ ॥

कालत्रयानवच्छिन्नो महाभूतस्तथा स्मृतिः ।
एको विष्णुर्महाभूतः पृथग्भूतेषु संस्थितः ॥ ५ ॥

यत्र सर्वाणि भूतानि निधीयन्ते ततो निधिः ।
महांश्चासौ निधिश्चेति महानिधिरुदाहृतः ॥ ६ ॥

भारावतरणं कृत्वा कुं महीं मोदयत्यसौ ।
मुदेरन्तर्णिजर्थत्वं [1] प्रसिद्धः कुमुदस्ततः ॥ ७ ॥

कुं धरां धारयामास हिरण्याक्षजिघांसया ।
वाराहं रूपमास्थाय तेनायं कुन्दरः स्मृतः ॥ ८ ॥

[2] कुन्दोपमः सुन्दराङ्गः स्वच्छस्फटिक[3] निर्मलः ।
कुन्दः प्रादात्कश्यपाय कुं महीमिति केशवः ॥ ९ ॥

---

[1] प्रख्यातः—क.  [2] कुन्दो हरिः—ख.  [3] सन्निभः—ख.

तापत्रयं शमयति पर्जन्य इव देहिनाम् ।
**पर्जन्यः** सर्वकामानामथवा [1]कामवर्षणात् ॥ १० ॥

स्मृतिमात्रेण सकलान् पुनातीत्यपि **पावनः** ।
हरत्यशेषं स्मृतिमात्रतोऽयमिति च स्मृतेः ॥ ११ ॥

इलति स्वपितीत्यज्ञ इलः स्यादनिलो न सः ।
गहनार्थाण्णिलेः कप्रत्ययान्न गहनोऽ**निलः** ॥ १२ ॥

अमृतं सागरादुत्थं पाययित्वा सुरान् स्वयम् ।
अश्नातीत्य**मृताशो**ऽयं यद्वा स्वात्मामृताशनात् ॥ १३ ॥

मृतं मरणमित्युक्तं यस्य तद्रहितं वपुः ।
विष्णुस्तेना**मृतवपु**र्दद्यादमृतमेव नः ॥ १४ ॥

सर्वं जानाति **सर्वज्ञो** नमस्तस्मै स मामवेत् ।
सर्वज्ञाय नमस्कृत्य यः सर्वज्ञश्रुतेरपि ॥ १५ ॥

[2]सर्वतो मुखमस्तीति श्रीविष्णुः **सर्वतोमुखः** ।
[3]तथा च भगवानूचे सर्वतोऽक्षिशिरोमुखम् ॥ १६ ॥

पत्रपुष्पफलैस्तोयैर्भक्तिमात्रसमर्पितैः ।
सुखेन लभ्यत इति **सुलभः** सुरसेवितः ॥ १७ ॥

**सुव्रतः** सु व्रतयति भुङ्क्ते चास्मान्निवर्तते ।
[4]णिच् स्याद्व्रते भोजने तन्निवृत्तौ चेति सूत्रतः ॥ १८ ॥

अनन्याधीनसिद्धित्वात्**सिद्धः** सिद्धिप्रदायकः ।
तथा नागार्जुनः प्राह महासिद्धो महेश्वरः ॥ १९ ॥

देवेश्वरत्वादेतस्य शत्रवो देवशत्रवः ।
तान् सर्वान् जयतीत्येष **शत्रुजित्**साल्वसूदनः ॥ २० ॥

---

[1] कामहर्षणात्–क. [2] सर्वत्र–ग. [3] तथापि–क. [4] णिचि व्रते भोजने–क.

तेषां पूर्वोक्तशत्रूणां तापनः **शत्रुतापनः** ।
स मच्छत्रुगणानां च तापनो भवताद्धरिः ॥ २१ ॥

न्यक्कृत्यावाकृत्य सर्वभूतानि नियमाय च ।
आवृणोति रुणद्धीति **न्यग्रोधो** नः सुखावहः ॥ २२ ॥

स्यादुदुम्बरमन्नाद्यं तद्रूपी पोषयन् जगत् ।
**उदुम्बरः** स्यादन्नाद्यमुदुम्बरमिति श्रुतेः ॥ २३ ॥

श्वो न [1]स्थातेति चा**श्वत्थः** प्रपञ्चः परमेश्वरः ।
पृषोदरादितस्तस्य तकारादेश उच्यते ॥ २४ ॥

आन्ध्रं चाणूरनामानं यो निषूदितवान् हरिः ।
स कृष्णो मुनिभिः प्रोक्त**श्चाणूरान्ध्रनिषूदनः** ॥ २५ ॥

**सहस्रार्चि**रनन्तानि यस्यार्चींषि स देवराट् ।
दिवि सूर्यसहस्रस्येत्यादि गीतासु गीयते ॥ २६ ॥

स्फुलिङ्गिनी विश्वरुचिर्धूम्रवर्णा सुलोहिता ।
कराली सुजवा काली ***सप्तजिह्वाः** स्मृतीरिताः ॥ २७ ॥

एधांसि दीप्तयः सप्त **सप्तैधा** अग्निरीश्वरः ।
श्रूयते सप्त ते अग्ने समिधः सप्त चेत्यपि ॥ २८ ॥

**सप्ताश्वः** सप्तनामकोऽथाश्वो वाहनमस्य **सः**† ।
एको अश्वो वहति सप्तनामेत्यादिवेदतः ॥ २९ ॥

[2]नैवास्ति या यस्य मूर्तिर्देहसंस्थानलक्षणा ।
अपरिच्छिन्नरूपत्वाद**मूर्तिः** परमेश्वरः ॥ ३० ॥

---

* सप्तजिह्वाविशिष्टो हरिः सप्तजिह्वोऽत्रानुसन्धेयः    † अत्र स इति सप्तवाहननामा हरिरनुसन्धेयः ।    [1] तिष्ठति—**क.**    [2] नैकास्ति—**ग.**

अघं दुःखं च पापं च द्वयं यस्य न विद्यते ।
अयत्नतोऽनघेत्यादिस्मृतेरनघ उच्यते ॥ ३१ ॥

यः प्रमात्रादिसाक्षित्वात्सर्वमानैकगोचरः ।
अचिन्त्याव्यक्त[1]रूपायस्मृत्याचिन्त्यः स उच्यते ॥ ३२ ॥

भयं करोतीति विष्णुरसन्मार्गप्रवर्तिनाम् ।
भयं कृन्तति भक्तानामिति वा भयकृच्छिवः ॥ ३३ ॥

वर्णाश्रमाचारवतां भयं नाशयतीत्यसौ ।
**भयनाशन** इत्युक्तः स्मृतेर्विरचिताभयः ॥ ३४ ॥

सौक्ष्म्यातिशयशालित्वादणुर्नारायणः स्मृतः ।
अणोरणीयानेषोऽणुरात्मा चेति श्रुतिद्वयम् ॥ ३५ ॥

बृंहणत्वाद्बृहत्त्वाच्च बृहच्छब्दाभिधो हरिः ।
तथा च मानं बृहती बृहन्तमिति याजुषे ॥ ३६ ॥

अस्थूलमित्यादिवाचा कृशोऽयं कमलेक्षणः ।
[2]एतस्य युज्यते कार्श्यं लीलाविग्रहधारिणः ॥ ३७ ॥

स्थूलप्रपञ्चहेतुत्वात्स्थूल इत्युपचर्यते ।
अनण्वह्रस्वमिति च श्रुत्या तदपि युज्यते ॥ ३८ ॥

सत्त्वं रजस्तमश्चेति सृष्टिस्थित्यन्तकर्मसु ।
गुणान् बिभर्तीति विष्णुर्गुणभृत् स्याद्गुणार्णवः ॥ ३९ ॥

विष्णुः सर्वगुणाभावान्निर्गुणः परमार्थतः ।
केवलो निर्गुणश्रुत्या निर्गुणायेति च स्मृतेः ॥ ४० ॥

महिमा तर्कतोऽप्यस्य वक्तुं नो शक्यते **महान्** ।
आपस्तम्बो वदत्येवमस्पर्शश्च महान् शुचिः ॥ ४१ ॥

---

[1] रूपो यः—क.   [2] एकस्य व्यज्यते—क.

पृथ्व्यादीनां धाराणां धारकत्वान्न केनचित् ।
ध्रियते तेन सर्वात्मा देवो नारायणोऽधृतः ॥ ४२ ॥

केन वा धार्यते विष्णुरित्याशङ्क्याह योगिराट् ।
स्वयं स्वेनात्मनैवासौ धार्यते स्वधृतस्ततः ॥ ४३ ॥

वेदात्मकः शब्दराशेर्महान् यन्मुखनिर्गतः ।
ततः स्वास्योऽस्य महतो भूतस्येत्यादिकश्रुतेः ॥ ४४ ॥

अन्यस्य वंशिनो वंशः पाश्चात्यः परिदृश्यते ।
प्राग्वंशोऽस्य प्रपञ्चाख्यो वंशः प्रागेव दृश्यते ॥ ४५ ॥

यस्तु वंशं प्रपञ्चाख्यं वर्धयन् छेदयन्नपि ।
स वंशवर्धनो नाम भूयान्मे वंशवर्धनः ॥ ४६ ॥

भुवो भारं बिभर्तीति यश्चानन्तादिरूपतः ।
भारभृद्भिभृताद्भारं मम संसारजं हरिः ॥ ४७ ॥

वेदाद्यैः कथ्यत इति कथितः परमस्ततः ।
सर्वे वेदा यत्पदमामनन्तीत्यादिवेदतः ॥ ४८ ॥

स योगी योगवान्योगो ज्ञानं वा गम्यते तथा ।
यः स्वात्मनि समाधत्ते स्वात्मानं सर्वदा हरिः ॥ ४९ ॥

योगान्तरायैर्हन्यन्ते योगिनोऽन्यस्वरूपतः ।
अयं तद्रहितत्वेन योगीशो योगदः स्मृतः ॥ ५० ॥

सर्वान् कामान् ददातीति श्रीधरः सर्वकामदः ।
ब्रह्मसूत्रात्फलमत उपपत्तेरिति स्मृतेः ॥ ५१ ॥

भ्रमतां च भवारण्ये सर्वेषां प्राणिनां हरिः ।
अयमाश्रमविश्रामस्थानवत्त्वात्किलाश्रमः ॥ ५२ ॥

योऽविवेकिजनान् सन्तापयति **श्रमणस्ततः** ।
सुखं दुःखं मत्त एवेत्यादि गीतासु गीयते ॥ ५३ ॥

तत्करोतीत्यादिनात्र कृते णिचि पचाद्याचि ।
**क्षामः** क्षामाः प्रजाः क्षीणाः [1]करोतीत्यखिलान्तकः ॥ ५४ ॥

सु शोभनानि पर्णानि छन्दोरूपाणि यस्य सः ।
हरिः **सुपर्ण**श्छन्दांसि [2]यस्येति भगवद्वचः ॥ ५५ ॥

वायुर्वहति यद्भीत्या भूतानि सकलान्यपि ।
स **वायुवाहनो** भीषाऽस्माद्वातः पवतेश्रुतेः ॥ ५६ ॥

रामो धनुर्धरः श्रीमानित्यादि स्मर्यते [3]तथा ।
रामो **धनुर्धरः** श्रीमान् धारयामास यद्धनुः ॥ ५७ ॥

सैष दाशरथी रामो धनुर्वेदं च वेत्त्यसौ ।
**धनुर्वेद** इति प्रोक्तो धनुर्वेदविशारदः ॥ ५८ ॥

विष्णुर्दमयतां मध्ये दमनो **दण्ड** उच्यते ।
दण्डो दमयतामस्मीत्येवं भगवतो वचः ॥ ५९ ॥

वैवस्वतादिभूपालरूपेण सकलाः प्रजाः ।
सदा दमयतीत्येवं विष्णुर्**दमयिता** स्वयम् ॥ ६० ॥

**दम्येषु** दुष्टलोकेषु दण्डकार्यफलं दमः ।
स एव तत्स्वरूपत्वाद्दमशब्दाभिधो हरिः ॥ ६१ ॥

न सुरैरसुरैर्वापि न यक्षैर्न च राक्षसैः ।
पराजितः [4]कैश्चिदपि हरिरित्य**पराजितः** ॥ ६२ ॥

सहते वा सर्वशत्रून् समर्थः सर्वकर्मसु ।
इति **सर्वसहो** विष्णुः सर्वभारसहोऽस्तु नः ॥ ६३ ॥

---

[1] करोतीति खलान्तकः–**क.** [2] यस्य ते–**क.** [3] सदा–**ग.** [4] कश्चिदपि–**क.**

स्वेषु स्वेषु च कृत्येषु यः सर्वानपि सर्वदा ।
व्यवस्थापयतीत्येष **नियन्ता** निगमोदितः ॥ ६४ ॥

नियमो नियतिर्यस्य श्रीविष्णोर्नैव विद्यते ।
स विष्णुः स्याद**नियमो** ममास्तु नियमप्रदः ॥ ६५ ॥

यस्य सर्वनियन्तृत्वान्नियन्त्रन्तरवर्जनात् ।
न विद्यते यमो मृत्युस्तेनायम**यमो** हरिः ॥ ६६ ॥

सत्त्वशौर्यादिविद्यादिगुणोऽस्यास्तीति **सत्त्ववान्** ।
नमस्तस्मै सत्त्ववते स सत्त्वं [1]सन्तनोतु नः ॥ ६७ ॥

गुणे सत्त्वाभिधे विष्णुः प्राधान्येन स्थितो यतः ।
**सात्त्विकोऽयं** स्मृतिस्तत्र नमस्ते सत्त्वमूर्तये ॥ ६८ ॥

**सत्योऽयं** सत्सु साधुत्वात्तथा यजुषि पठ्यते ।
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥ ६९ ॥

सत्ये यथार्थकथने धर्मे च विधिलक्षणे ।
परायणो हि नियतः **सत्यधर्मपरायणः** ॥ ७० ॥

यदभिप्रेयते मोक्षकाङ्क्षिभिर्वाभिमुख्यतः ।
प्रलयेऽस्मिन् प्रैति विश्वमित्य**भिप्राय** उच्यते ॥ ७१ ॥

प्रियाणीष्टान्यर्हतीति **प्रियार्हः** परमेश्वरः ।
यद्यदिष्टतमं लोके तद्देयमिति शासनात् ॥ ७२ ॥

स्वागतासनगन्धाद्यैः सपर्यासाधनैरयम् ।
पूजनीय इतीहा**र्हः** सर्वेशः प्राणदोऽस्तु नः ॥ ७३ ॥

न केवलं प्रियार्हः स्यात्किन्त्वयं स्वागतादिभिः ।
प्रियं करोति भजतामितीशः **प्रियकृत्**स्मृतः ॥ ७४ ॥

---

[1] सुतनोतु—**क.**

स प्रीतिं भजतां तेषां वर्धयन् **प्रीतिवर्धनः** ।
इत्ययं भगवानाह भजतां प्रीतिपूर्वकम् ॥ ७५ ॥

विहायसो विष्णुपदं सूर्यो [1]यद्गतिराश्रयः ।
यस्यासौ श्रीमहाविष्णुर्**विहायसगतिः** स्मृतः ॥ ८६ ॥

द्योतते स्वयमेवेति **ज्योतिर्**नारायणः स्मृतः ।
नारायणपरो ज्योतिरितीयं मन्त्रवर्णवाक् ॥ ७७ ॥

द्युतिर्दीप्तिरथेच्छा वा सा यस्य स्यात्सुशोभना ।
स वै **सुरुचि**रित्युक्तस्तस्मै सुरुचये नमः ॥ ७८ ॥

समस्तदेवतोद्देशप्रवृत्तेष्वपि कर्मसु ।
हुतं भुनक्ति भुङ्क्ते वा **हुतभुक्**कथ्यते यतः ॥ ७९ ॥

त्रयाणामपि लोकानां विभुत्वाच्च विभुर्हरिः ।
सर्वत्र वर्तमानत्वाद्विभुर्विभवदोऽस्तु नः ॥ ८० ॥

भूरसानयमादत्ते ह्यादित्यात्मा ततो **रविः** ।
रसानां च तथादानाद्रविरित्यपि च स्मृतः ॥ ८१ ॥

विविधं रोचत इति विष्णुरेव **विरोचनः** ।
शुद्धो विरोचनः केशीत्यादित्यहृदयोदितः ॥ ८२ ॥

सूयते श्रियमित्येव **सूर्यो** वैश्वानरोऽथ वा ।
राजसूयेत्यादिसूत्रात्सूर्यशब्दो निपात्यते ॥ ८३ ॥

[2]**सविता**यं प्रसविता सर्वस्य जगतो यतः ।
तथा च बह्वृचे स्पष्टं सविता नः सुवत्विति ॥ ८४ ॥

रविर्विलोचनं चक्षुरस्येति **रविलोचनः** ।
तथा च चक्षुषी चन्द्रसूर्यावित्यादिका श्रुतिः ॥ ८५ ॥

---

[1] वा गति—**क.** [2] सविता यः—**ग.**

देशकालपरिच्छेदशून्यत्वात्सर्वगत्वतः ।
नित्यत्वाद[1]प्यनन्तोऽयं शेषरूपोऽथवा हरिः ॥ ८६ ॥

जातवेदस्स्वरूपेण हुतं सर्वं भुनक्ति यत् ।
भुङ्क्ते वा हुतभुग्विष्णुस्तस्मै हुतभुजे नमः ॥ ८७ ॥

**भोक्ता** जगत्पालयति भुङ्क्ते भोग्यामचेतनाम् ।
प्रकृतिं वा तथा गीता [2]कर्ता भोक्ता महेश्वरः ॥ ८८ ॥

हरिर्ददाति भक्तेभ्यः सुखं यन्मोक्षलक्षणम् ।
असुखं खण्डयति वा **सुखदोऽसुखदो**ऽपि च ॥ ८९ ॥

असकृज्जायमानत्वाच्छ्रीहरिर्धर्मगुप्तये ।
**अनेकजो** मत्स्यरूपाद्यव[3]तारस्य धारणात् ॥ ९० ॥

हिरण्यगर्भः स्यादग्रे जातत्वाद**ग्रजो** हरिः ।
हिरण्यगर्भः समवर्तताग्र इति च श्रुतेः ॥ ९१ ॥

अवाप्तसर्वकामत्वात्प्राप्तिहेतोरभावतः ।
न विद्यतेऽस्य निर्वेदस्तेना**निर्विण्ण** उच्यते ॥ ९२ ॥

सतः साधूनाभिमुख्यान्मृष्यते क्षमते यतः ।
**सदामर्षी** ततश्चोक्तो महर्षिगणहर्षितः ॥ ९३ ॥

त्रयाणामपि लोकानामाधारत्वाज्जगत्प्रभुः ।
**लोकाधिष्ठान**मित्युक्तः सर्वब्रह्मैव केवलम् ॥ ९४ ॥

आश्चर्यकररूपत्वाद**द्भुतो** भगवान् हरिः ।
आश्चर्यवत्पश्यति कश्चिदेनमिति च [4]श्रुतेः ॥ ९५ ॥

सनादिति निपातोऽयं चिरार्थवचनो यतः ।
कालरूपी तथा विष्णुः **सना**च्छब्दाभिधः स्मृतः ॥ ९६ ॥

---

[1] प्यसक्तोऽयं—क. [2] भर्ता—ग. [3] तारानुधारणात्—ख. [4] स्मृतेः—ग

सनातनानां ब्रह्मादिदेवानामतिशायनात् ।
स सर्वकारणत्वाच्च सनातनतमो हरिः ॥ ९७ ॥

बडबानलवर्णो हि कपिलः सर्वतः [1]स्फुटः ।
बडबानलरूपत्वात्कपिलो विष्णुरीरितः ॥ ९८ ॥

सूत्रात्मना जगत्कम्पयति वेष्टयतीत्यसौ ।
कपिर्देवोऽथवा सूर्यः कं जलं रश्मिभिः पिबन् ॥ ९९ ॥

प्रलयेऽस्मिन् जगत्सर्वमप्येतीत्यप्ययो हरिः ।
स नः पायादपायेभ्यः सर्वोपायैरधोक्षजः ॥ १०० ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतन्नवमं शतं समभवत्पद्यप्रसूनाञ्जलौ ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा श्रीमदक्षोभ्यमञ्जरी ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्यप्रसूनाञ्जलौ
अक्षोभ्यमञ्जरी समाप्ता ।

---

[1] स्फुटम्—ग.

## स्वस्तिदमञ्जरी

भक्तेभ्यो मङ्गलं स्वस्ति ददाति **स्वस्तिदो** हरिः ।
स मह्यं सकुटुम्बाय [1] ददातु स्वस्ति सर्वदा ॥ १ ॥

यो हि भक्त्यैकनिष्ठानां जनानां मङ्गलात्मकम् ।
विष्णुः स्वस्ति करोतीति **स्वस्तिकृ**त्कथितो बुधैः ॥ २ ॥

यस्य स्वरूपमात्मीयं परमानन्दलक्षणम् ।
मङ्गलं चेति [2] कृत्वासौ विष्णुः **स्वस्त्य**भिधानवान् ॥ ३ ॥

तादृक्स्वरूपं भुङ्क्तेऽयमिति वा **स्वस्तिभुक्** स्मृतः ।
भक्तानां मङ्गलं स्वस्ति भुनक्तीत्यपि माधवः ॥ ४ ॥

यतो दक्षिणशब्दोऽयमाशुकारिणि वर्तते ।
स्वस्ति दातुमयं शीघ्रं समर्थः **स्वस्तिदक्षिणः** ॥ ५ ॥

अवाप्ताखिलकामत्वाद्रागद्वेषाद्यभावतः ।
**अरौद्र** इति विख्यातो रुद्रेन्द्रपरिवन्दितः ॥ ६ ॥

शेषरूपी **कुण्डली** स्यात्सांख्ययोगात्मके तथा ।
कुण्डले मकराकारे यस्य स्त इति **कुण्डली** ॥ ७ ॥

सुदर्शनाभिधं चक्रं स्याद्यस्यायुधमुत्तमम् ।
स **चक्री** शेषरूपो वा विष्णुर्जिष्णुप्रपूजितः ॥ ८ ॥

क्रमो हि पादविक्षेपः शौर्यं वास्य विलक्षणम् ।
अस्तीत्यशेषरूपेभ्यो **विक्रमी**[3]ति बुधोदितः ॥ ९ ॥

---

[1] ददाति—**ग.** [2] कृत्वादौ—**ग.** [3] विबुधो—**ग.**

ऊर्जितं शासनं यस्य निगमागमलक्षणम् ।
श्रुतिस्मृती ममैवाज्ञे स्मृत्याप्यूर्जितशासनः ॥ १० ॥

शब्दप्रवृत्तिहेतूनां जात्यादीनामसम्भवात् ।
**शब्दातिगो** यतो वाचो निवर्तन्त इति श्रुतेः ॥ ११ ॥

सर्वे वेदा यत्पदमामनन्तीति[1]श्रुतेरपि ।
वेदैश्च सर्वैरित्यादिस्मृतेः **शब्दसहो** हरिः ॥ १२ ॥

तापत्रयाभितप्तानां सर्वदायं शरीरिणाम् ।
विश्रान्तिस्थानरूपत्वाच्छि**शिरः** श्रीपतिः स्मृतः ॥ १३ ॥

संसारिज्ञानिनोरात्मा संसारश्चेति शर्वरी ।
तां क्रमेणोभयोः कुर्वन् श्रीहरिः **शर्वरीकरः** ॥ १४ ॥

[2]क्रौर्यं नाम मनोधर्मः क्रोधस्तापज आन्तरः ।
स च साभिनिवेशोऽस्य नास्तीत्य**क्रूर** उच्यते ॥ १५ ॥

कर्मणा मनसा वाचा वपुषापि च शोभनः ।
यतस्ततः **पेशलो**ऽयं कुशलैः खलु कथ्यते ॥ १६ ॥

प्रवृद्धशक्तिता शीघ्रकारिता च समर्थता ।
सन्ति सर्वेश्वरे यस्मात्तस्माद्दक्षोऽभिधीयते ॥ १७ ॥

दक्षते गच्छति हरिर्हिनस्तीत्यथ **दक्षिणः** ।
धातुपाठे यतो दक्ष गतिहिंसनयोरिति ॥ १८ ॥

क्षमावतां योगिनां हि श्रेष्ठोऽयं **क्षमिणां वरः** ।
तथा रामायणे प्रोक्तं क्षमया पृथिवीसमः ॥ १९ ॥

निरस्तातिशयं सर्वविषयं ज्ञानमस्य हि ।
अस्ति तन्नेतरेषां तु तेन **विद्वत्तमो** हरिः ॥ २० ॥

---

[1] श्रुतेरिह—क.  [2] शाठ्यं—क.

संसारलक्षणं यस्य वीतं हि विगतं भयम् ।
स च सर्वेश्वरत्वाच्च देवो **वीतभयः** स्मृतः ॥ २१ ॥

पुण्यं पुण्यकरं यस्य श्रवणं कीर्तनं हरेः ।
स सर्वश्रुतिभिः प्रोक्तः **पुण्यश्रवणकीर्तनः** ॥ २२ ॥

निजपादाम्बुजासक्तचेतसोऽयं शरीरिणः ।
संसारसागरादुत्तारयत्युत्तारणो हरिः ॥ २३ ॥

स्वनाम जपतां पुंसां दुष्कृतिं पापसंज्ञिताम् ।
हन्तीत्यसौ **दुष्कृतिहा** दुष्कृतिं मे निकृन्ततु ॥ २४ ॥

पुण्यं करोति स्मरतां श्रुतिलक्षणयाऽथवा ।
वाचायं पुण्यमाचष्ट इति **पुण्यः** परेश्वरः ॥ २५ ॥

नारायणः स्वभक्तानां [1]भाव्यनर्थस्य सूचकान् ।
प्रणाशयति दुःस्वप्नान् तेन **दुःस्वप्ननाशनः** ॥ २६ ॥

देहिनां विविधा वीरा गतिर्मुक्तिप्रदानतः ।
हन्तीति **वीरहा** विष्णुर्वेद्यो विद्याविशारदैः ॥ २७ ॥

यः सत्त्वगुणमास्थाय रक्षन् विष्णुर्जगत्त्रयम् ।
नन्द्यादित्वात्कर्तरि ल्युस्तेन रूपं हि **रक्षणः** ॥ २८ ॥

सन्मार्गवर्तिनः सन्तस्तेष्वयं सत्स्वरूपतः ।
स्थितः पृषोदरादित्वात्साधु **सन्तस्तदाश्रयाः** ॥ २९ ॥

प्राणरूपेण यः सर्वाः प्रजाः सञ्जीवयन् हरिः ।
**जीवनः** स्यात्तथा स्कान्दे तं वन्दे विश्वजीवनम् ॥ ३० ॥

परितः सर्वतः सर्वं विश्वं व्याप्य व्यवस्थितः ।
तेन नारायणः प्रोक्तो मुनिभिः **पर्यवस्थितः** ॥ ३१ ॥

---

[1] भाविकार्यस्य—क.

अनन्तरूपः शेषो वा प्रपञ्चाकारतः स्थितः ।
पश्यामि त्वां सर्वतो[1]ऽनन्तरूपमिति च स्मृतेः ॥ ३२ ॥

यस्यापरिमितानन्ता शक्तिः श्रीर्विद्यते स च ।
अनन्तश्रीरिति ख्यातोऽनन्तां मे दिशतु श्रियम् ॥ ३३ ॥

क्रोधो मन्युर्जितो येन जितमन्युः स माधवः ।
करोतु मामपि प्रायो जितमन्युं जनार्दनः ॥ ३४ ॥

भयं संसारजं पुंसामपघ्नन् स भयापहः ।
तथा च स्मर्यते देवः संसारभयनाशनः ॥ ३५ ॥

न्यायोपायैश्चतुर्भिर्यः समवेतोऽखिलात्मकः ।
यद्वा सर्वार्थकुशलश्चतुरश्रः स्वयं हरिः ॥ ३६ ॥

आत्मा स्वरूपं चित्तं च गभीरो यस्य वै हरेः ।
परिच्छेत्तुमशक्यत्वाद्गभीरात्मा ततः स्मृतः ॥ ३७ ॥

विचित्रेभ्योऽधिकरिभ्यो विविधानि फलान्ययम् ।
विशेषेण दिशन् देवो विदिशो विष्णुरुच्यते ॥ ३८ ॥

माधवो विविधामाज्ञां शक्रादीनां दिवौकसाम् ।
स्वयं समादिशन् कुर्वन् व्यादिशो व्यासदर्शितः ॥ ३९ ॥

[2] कर्मणामपि सर्वेषां दिशन् कर्मफलं हरिः ।
वेदात्मनेति स दिशो दिशत्वाशु सुखानि नः ॥ ४० ॥

यस्यादिः कारणं नैव विद्यतेऽनादिरच्युतः ।
अनादित्वान्निर्गुणत्वात्परमात्मेति च श्रुतेः ॥ ४१ ॥

भूराधारो भुवो भूमेर्लक्ष्मीः शोभाथवा पुनः ।
भूर्भुवोर्लोकयोर्लक्ष्मीरात्मविद्येति वा हरिः ॥ ४२ ॥

---

[1] ऽनेकरू–क.  [2] कर्मिणामधि–क.

शोभना विविधा वीरा गतयो यस्य सोऽच्युतः ।
**सुवीरः** शोभनं यस्य यद्वा विविधमीरणम् ॥ ४३ ॥

रुचिरे सुन्दरे यस्येत्यङ्गदे बाहुभूषणे ।
स जगद्भूषणो विष्णुर्विख्यातो **रुचिराङ्गदः** ॥ ४४ ॥

कर्तरि ल्युड्विधानं स्याद्बहुलग्रहणात्स्फुटम् ।
तेनायं जनयन् जन्तून् **जननः** स्याज्जनार्दनः ॥ ४५ ॥

जनस्य जनिमज्जन्तोर्जन्मशब्दात्समुद्भवः ।
तन्मूलकारणं चादि**र्जनजन्मादि**रीश्वरः ॥ ४६ ॥

सर्वस्य भयहेतुत्वा**द्भीमो** नारायणः स्मृतः ।
मृगन्न भीममुपहत्नुमुग्रमिति च श्रुतेः ॥ ४७ ॥

यतः स्याद्धि सुरादीनां भयहेतुः पराक्रमः ।
अस्यावतारेष्विति च देवो **भीमपराक्रमः** ॥ ४८ ॥

भूम्यादिपञ्चभूतानां सर्वाधारस्वरूपिणाम् ।
अयमाधाररूपत्वा**दाधारनिलयो** हरिः ॥ ४९ ॥

धयत्ययं हि पिबति संहारसमये प्रजाः ।
**धातेत्यधाता** वा यस्य धाताधारो न विद्यते ॥ ५० ॥

[1]मुकुलात्मकपुष्पस्य हासवद्धासवत्त्वतः ।
विश्वात्मकविकारोऽस्य **पुष्पहासः** स बोधितः ॥ ५१ ॥

नित्यप्रबुद्धरूपत्वान्निद्रादिरहितो हरिः ।
जागर्तीति प्रकर्षेण ततो देवः **प्रजागरः** ॥ ५२ ॥

सर्वेषामुपरीत्यूर्ध्वं तिष्ठन् विष्णुरिहो**र्ध्वगः** ।
श्रुतिस्तत्र त्रिपादूर्ध्व उदैत्पुरुष इत्यपि ॥ ५३ ॥

---

[1] मुकुलाकाशपु–क.

सत्पथेनाचरत्येष सतां कर्मणि केशवः ।
इत्ययं **सत्पथाचारः** सदाचारं ददातु नः ॥ ५४ ॥

मृतान् परीक्षित्प्रभृतीन् **प्राणदो** जीवयन् हरिः ।
तथा कथा भागवते गुरुपुत्रमजीवयत् ॥ ५५ ॥

ओङ्कारः प्रणवो नाम वाचकः परमात्मनः ।
तदभेदोपचारेण **प्रणवः** परमेश्वरः ॥ ५६ ॥

यः प्राणान् व्यवहारार्थान् कुर्वन् नारायणः **पणः** ।
तथा सर्वाणि रूपाणि विचित्येत्यादिका श्रुतिः ॥ ५७ ॥

**प्रमाणं** प्रमितिः संविन्निष्कृष्टार्थः स्वयंप्रभा ।
[1]ज्ञानस्वरूपं प्रज्ञानं ब्रह्मेत्यादिश्रुतिस्मृती ॥ ५८ ॥

प्राणशब्देनेन्द्रियाणि जीवाः प्राणादयोऽपि वा ।
सर्वे यत्र निलीयन्ते स **प्राणनिलयः** स्मृतः ॥ ५९ ॥

पोषयन्नन्नरूपेण यः प्राणान् [2]**प्राणभृत्स्मृतः** ।
डुभृञ्धातोः क्विपि कृते ह्रस्वस्य स्यात्तुगागमः ॥ ६० ॥

यः प्राणान् प्राणिनो विष्णुः [3]प्राणाख्यैर्जीवयन् स्वयम् ।
स **प्राणजीवनो** वेदेऽप्ययं जीवातुरागमात् ॥ ६१ ॥

सत्यं तथ्यं सदमृतं तत्त्वं च परमार्थतः ।
ब्रह्मणो वाचकाः शब्दास्तस्मात्तत्त्वाभिधो हरिः ॥ ६२ ॥

तत्त्वं निजस्वरूपं हि यथावद्वेत्ति तत्त्ववित् ।
स मेऽस्तु ब्रह्मतत्त्वस्य बोधको भवबाधकः ॥ ६३ ॥

विष्णुरेकोऽप्यसावात्मा चैकात्मा कर्मधारयः ।
तथा चात्मा वा इदमेक एवाग्र इति श्रुतेः ॥ ६४ ॥

---

[1] ज्ञानं स्व–क. [2] प्राणभृत्स्वतः–क. [3] प्राणाख्ये–क.

न जायत इति श्रुत्या जन्ममृत्युजरादिकान् ।
अतीत्य गच्छतीत्येव **जन्ममृत्युजरातिगः** ॥ ६५ ॥

भूर्भुवस्स्वरिमान् लोकान् तरुवद्योऽवतिष्ठति ।
लोकः संसारवृक्षो वा **भूर्भुवस्स्वस्तरुर्हरिः** ॥ ६६ ॥

स्वपादपद्मसंसक्तभक्तसंसारसागरम् ।
तारयन् **तार** इत्युक्तस्**तारो** वा प्रणवात्मकः ॥ ६७ ॥

**सविता** सर्वलोकस्य जनकत्वात्तथा स्मृतिः ।
सविता सर्वलोकानां त्वं पिता त्वं पितामहः ॥ ६८ ॥

पितामहस्यापि चतुर्मुखस्य ब्रह्मणः पिता ।
पाराशर्येण तेनोक्तः श्रीविष्णुः **प्रपितामहः** ॥ ६९ ॥

यज्ञात्मावस्थितो **यज्ञ**स्तथा श्रीयाजुषी श्रुतिः ।
अयं यज्ञो * नोपनमेद्विष्णुर्वै यज्ञ इत्यपि ॥ ७० ॥

**यज्ञानां** च **पतिः** स्वामी तथा च भगवद्वचः ।
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरित्यपि ॥ ७१ ॥

यजमानात्मना तिष्ठन् **यज्वा** यज्ञेश्वरः स्वयम् ।
तथा च श्रूयते यज्ञो यजमानो य इत्यपि ॥ ७२ ॥

वराहमूर्तिर्**यज्ञाङ्गो** यज्ञा अङ्गानि यस्य सः ।
वेदपादो यूपदंष्ट्र इत्यादिहरिवंशवाक् ॥ ७३ ॥

अपूर्वहेतुभूतान् यो यज्ञान् वाहयतीति च ।
स **यज्ञवाहनो** नाम नमस्ते यज्ञवाहन ! ॥ ७४ ॥

यज्ञान् बिभर्तीति यद्वा पाति विश्वम्भरो हरिः ।
स महात्मा समाख्यातो **यज्ञभृद्**यज्ञकोविदैः ॥ ७५ ॥

---

* यं यज्ञ इति नोपनमेदित्यस्यादिः.

विश्वादौ कुरुते यज्ञमिति **यज्ञकृदी**श्वरः ।
विश्वावसाने यज्ञं वा कृन्ततीत्यपि **यज्ञकृत्** ॥ ७६ ॥

[1] यज्ञाराध्यात्मना शेषी यज्ञानां जगदीश्वरः ।
यज्ञोऽस्यास्तीति **यज्ञी** स्यात्तस्मादिन् [2]तद्धितो भवेत् ॥ ७७ ॥

यज्ञं भुङ्क्ते भुनक्तीति यद्वायं **यज्ञभुक्** स्मृतः ।
यज्ञभुक् प्रलये विष्णुरेवं [3]भार्गवचोदितम् ॥ ७८ ॥

[4]यत्प्राणैस्साधनं यज्ञो यस्माद्यज्ञेन साध्यते ।
इति कृत्वा बुधैः प्रोक्तो देवोऽयं **यज्ञसाधनः** ॥ ७९ ॥

यज्ञस्यान्तं समाप्तिं वा पूर्णाहुत्या करोति च ।
यज्ञस्यान्तं फलप्राप्तिं कुर्वन् **यज्ञान्तकृद्धरिः** ॥ ८० ॥

ज्ञानयज्ञमिदं ब्रह्म यज्ञानां गुह्यमित्यतः ।
**यज्ञगुह्य**मिति प्रोक्तं ज्ञानिभिर्गुह्यवेदिभिः ॥ ८१ ॥

अद्यतेऽत्ति च भूतानि तस्माद**न्नं** तदुच्यते ।
अन्नं ब्रह्मेति व्यजानादिति श्रुत्यान्नमुच्यते ॥ ८२ ॥

यतोऽयमन्नमत्तीति विष्णुर**न्नाद**संज्ञितः ।
[5]अहमन्नादोऽअहमन्नाद इति याजुषी श्रुतिः ॥ ८३ ॥

आत्मैव योनिर्विश्वस्य यदुपादानकारणम् ।
**आत्मयोनि**र्वासुदेवं जगद्योनिमिति स्मृतः ॥ ८४ ॥

उपादान[6]त्वयुक्तस्य निमित्तत्वं च दर्शयन् ।
**स्वयं जात** इति प्राह स्वप्राधान्यतया हरिः ॥ ८५ ॥

---

[1] यज्ञानन्यात्मना—**क.** [2] कथितो—**क.** [3] भगवतोदितः—**क.** [4] यत्प्राणाः—**क.**
[5] **अहमन्नमहमन्नाद इत्थं—ग.** [6] त्वमुक्तास्य नि—**ग.**

**वैखानो** हि विशेषेण धरित्र्यां खननादयम् ।
पुराणोक्तं वराहोऽयं चखान धरणीमिति ॥ ८६ ॥

सामानि गायन् गोविन्दो गदितः **सामगायनः** ।
सामगायन! सामात्मन्! शाधि मां सामगायकम् ॥ ८७ ॥

**देवकीनन्दनो** देवो देवक्याः सुत इत्ययम् ।
देवकीपरमानन्दं कृष्णं वन्द इति स्मृतेः ॥ ८८ ॥

सृजत्ययं सर्वलोकानिति **स्रष्टेति** कथ्यते ।
स्रष्टारं सर्वलोकानामित्यादिश्रुतिशासनात् ॥ ८९ ॥

**क्षितीशोऽयं** क्षितेर्भूमेरीशो दशरथात्मजः ।
स रक्षतात् क्षितीशो मां तार्क्ष्यारूढः प्रतिक्षणम् ॥ ९० ॥

कीर्तितः पूजितो ध्यातः संस्मृतश्चापि वन्दितः ।
[1] पापराशिं नाशयति तेनायं **पापनाशनः** ॥ ९१ ॥

भूताद्यहङ्काररूपं पाञ्चजन्याख्यमीश्वरः ।
शङ्खं बिभर्तीति विष्णुः **शङ्खभृत्स्मृतिबोधितः** ॥ ९२ ॥

असिरस्य भवेद्विद्यामयो नन्दकसंज्ञितः ।
**नन्दकी** नन्दकोऽस्यास्तीत्यहं नन्दकिनं श्रये ॥ ९३ ॥

सुदर्शनाभिधं चक्रं मनस्तत्त्वात्मकं परम् ।
**चक्री** तच्चक्रमस्यास्तीत्यहं चक्रिणमाश्रये ॥ ९४ ॥

यदिन्द्रियादेराकाररूपं शार्ङ्गाभिधं धनुः ।
**शार्ङ्गधन्वा** तदस्यास्ति धनुषश्चेत्यनङ् भवेत् ॥ ९५ ॥

बुद्धितत्त्वात्मिकां कौमोदकीं नाम गदां वहन् ।
**गदाधर** इति ख्यातस्तन्नमामि गदाधरम् ॥ ९६ ॥

---

[1] पापराशीन्–ग.

रथाङ्गमिति यच्चक्रं तत्पाणावस्य वर्तते ।
**रथाङ्गपाणि**स्तेनोक्तस्तस्मै श्रीविष्णवे नमः ॥ ९७ ॥

यतो रथाङ्गपाणिः स्यात्तस्मादक्षोभणः स्मृतः ।
**इत्यक्षोभ्यः** क्रियात्साक्षान्मामक्षोभ्यमधोक्षजः ॥ ९८ ॥

एतावन्त्येवायुधानीत्येवं नैव नियम्यते ।
किन्तु [1] सर्वायुधी तेन **सर्वप्रहरणायुधः** ॥ ९९ ॥

आयुधत्वेनाप्रसिद्धान्यायुधान्यस्य सन्ति यत् ।
करजादीन्यतश्चान्ते **सर्वप्रहरणायुधः** ॥ १०० ॥

सर्वप्रहरणायुधायों नम इति

---

शास्त्रस्याद्यन्तमध्येष्वभिहितमिति वै मङ्गलं शास्त्रकृद्भि-
र्न्यासोऽप्योङ्काररूपं तदनु हरिनमस्काररूपं विधातुम् ।
ओङ्कारश्चाथशब्दस्मृतिपरिचयतो मङ्गलं चावसाने
भूयिष्ठां ते नमोनैगमवचनबलादों नमश्चेत्यवोचत् ॥ १ ॥

श्रीमद्विट्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतद्दशमं शतं समभवत्पूर्णं सहस्रं यतः ॥ २ ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा शुद्धा स्वस्तिदमञ्जरी ॥ ३ ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्मप्रसूनाञ्जलौ
स्वस्तिदमञ्जरी समाप्ता ।

---

[1] सर्वायुधान्येव—**क**.

# समाप्तिमञ्जरी

इतीदं कीर्तनं यस्य केशवस्य महात्मनः ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १ ॥

अन्यूनानतिरिक्ततां च समुवाचेतीदमित्यादिना
गोपालस्य जगद्गुरोर्नरहरेर्नाम्नां सहस्रं हि यत् ।
दिव्यानामिति शब्दतोऽत्र मुनिना द्वैपायनेनामुना
संख्याया उपपत्तिरप्यभिहिता नाम्नां प्रकारान्तरात् ॥ २ ॥

अशुभप्राप्तिभावं हि ययातिनहुषादिवत् ।
पठतः शृण्वतो नास्तीत्यमुत्रेहेति चोक्तवान् ॥ ३ ॥

* मोक्षं प्रति च हेतुत्वं कर्मणः केचिदूचिरे ।
कर्मणैव हि संसिद्धिमित्यादिवचनैर्बुधाः ॥ ४ ॥

ज्ञानस्य कर्मणश्चापि कारणत्वं समुच्चयात् ।
विद्यां चाविद्यामित्यादिश्रुतिभिः केचिदूचिरे ॥ ५ ॥

तन्निक्षिप्योक्तवानत्र ज्ञानान्मोक्षो भवेदिति ।
वेदान्तगो ब्राह्मणः स्यादितिपद्येन वै मुनिः ॥ ६ ॥

तं त्वौपनिषदं चेति नान्यः पन्था इति [1] श्रुतेः ।
ज्ञानादेव तु कैवल्यमिति च श्रुतिशासनात् ॥ ७ ॥

समुच्चयश्रुतेस्तर्हि कर्मकारणतास्मृतेः ।
कोऽर्थो निर्णीत इति चेत्तत्र निर्णय उच्यते ॥ ८ ॥

---

* घ. मातृकायां इत एव समाप्तिमञ्जर्यारम्भः ।    [1] स्मृतेः—घ.

कर्मणां कारणत्वं हि चित्तशुद्धिं प्रति स्मृतम् ।
तद्द्वारा कारणत्वं हि न हि केनापि वार्यते ॥ ९ ॥

ज्ञानं हि साक्षाद्धेतुः स्यान्न कर्म न समुच्चयः ।
तपसा कल्मषं हन्तीत्यादिना बहुधेरितम् ॥ १० ॥

ज्ञानादेव तु मोक्षः स्याच्छ्रुतिस्मृत्यनुरोधतः ।
व्यासः पुराणान्तरेषु तथा दर्शितवान् स्वयम् ॥ ११ ॥

उक्त्वा विमतवाक्यानि स्वमतं च प्रदर्शितम् ।
तथा हि तानि वाक्यानि प्रदर्श्यन्तेऽत्र कानिचित् ॥ १२ ॥

केचित् प्रधानं त्रिगुणं स्वतन्त्रं केवलं जडम् ।
* अणवः केचिदिच्छन्ति शब्दं केचन मोहिताः ॥ १३ ॥

क्षणप्रध्वंसि विज्ञानं केचन भ्रान्तचेतसः ।
शून्यसंज्ञं बुधाः केचिन्निरुपाख्यं विमोहिताः ॥ १४ ॥

केचिद्भूतानि चेच्छन्ति निसर्गं केचन भ्रमात् ।
कर्मणैव समुत्पन्नं समस्तमिति केचन ॥ १५ ॥

ज्ञानात्तत्तत्कारणानां मोक्षो भवति चेत्यपि ।
मोक्षाख्यः पुरुषार्थो हि नास्तीत्यपि च केचन ॥ १६ ॥

तत्र तत्रैव तर्कांश्च प्रवदन्ति यथाबलम् ।
सर्वे वादाः † श्रुतिस्मृत्या विरुद्धा इति मे मतिः ॥ १७ ॥

पापिष्ठानां च जन्तूनां तत्र तत्र सुरर्षभाः ! ।
प्राक्संसारवशादेव जायते रुचिरास्तिकी ॥ १८ ॥

---

* अत्र अणव इत्यनन्तरं इतीति शेषः. यद्वा "अणूनिच्छन्ति केचित्तु" इति पाठः समञ्जसः. † श्रुतिसहिता स्मृतिः, तयेत्यर्थः.

बुद्धिमान्वीक्षकीं प्राप्य निरर्थं प्रवदन्ति यत् ।
तच्छ्रुतिस्मृतिवादस्य [1] विरहं मुनिपुङ्गवाः ! ॥ १९ ॥

कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते ॥ २० ॥

नित्यं ज्ञानं समासाद्य नरो बन्धात्प्रमुच्यते ।
न कर्मणा न प्रजया धनेनेत्यादिकश्रुतेः ॥ २१ ॥

धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ २२ ॥

कर्मणा बध्यते जन्तुर्विद्ययैव विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ २३ ॥

यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने सदैवापि वेदान्ताभ्यासयत्नवान् ॥ २४ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ २५ ॥

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मना ॥ २६ ॥

ब्रह्मविदाप्नोति परं शोकं तरति चात्मवित् ।
ब्रह्म वेदेति ब्रह्मैव सन्नित्यर्थः श्रुतीरितः ॥ २७ ॥

यदा चर्मवदाकाशं वेष्टयिष्यति मानवः ।
तदा शिवमविज्ञाय दुःखस्यान्तं गमिष्यति ॥ २८ ॥

इत्यादिबहुभिर्वाक्यैर्गोपालो विश्वकारणम् ।
तज्ज्ञानादेव मोक्षः स्यान्नात्र कार्या विचारणा ॥ २९ ॥

---

[1] निरहं–घ.

धर्मार्थी प्राप्नुयाद्धर्ममित्यादिपुरुषोत्तमे ।
इत्यन्तं दशभिः पद्यैरधिकारिप्रभेदतः ॥ ३० ॥

सामान्यतो विशेषोऽत्र फलवत्त्वं हि कथ्यते ।
[1]विष्णोर्नाम्नां सहस्रस्य वेदव्यासेन धीमता ॥ ३१ ॥

विषयेष्विन्द्रियाणां हि प्रवृत्तिश्चानुकूलता ।
काल इत्युच्यते मूले प्रजा सन्ततिरुच्यते ॥ ३२ ॥

शुचेरेकाग्रचित्तस्य विशिष्टस्याधिकारिणः ।
फलाधिक्यं दर्शयति मूले सत्यवतीसुतः ॥ ३३ ॥

श्रीविष्णुभक्तेः प्राधान्यं नान्यस्येत्येव निश्चयात् ।
वासुदेवाश्रयो मर्त्य इत्यूचे भगवानृषिः ॥ ३४ ॥

भक्तिर्भजनतात्पर्यं श्रद्धास्तिक्यमिति स्मृता ।
न मूले पुनरुक्तिः स्याच्छ्रद्धाभक्त्यर्थभेदतः ॥ ३५ ॥

नक्रोधश्च नलोभश्च नाशुभा मतिरित्यपि ।
पदत्रयं समस्तं स्याद्भवन्तीत्यन्वयस्ततः ॥ ३६ ॥

न च मात्सर्यमित्यस्य व्यत्ययाद्वचनस्य हि ।
बुद्धिमद्भिर्योजनीयो भवन्तीति क्रियान्वयः ॥ ३७ ॥

द्यौः सचन्द्रार्कनक्षत्रेत्यारभ्य तु पराभवम् ।
इत्यन्तं नवभिः पद्यैः सर्वं नारायणात्मकम् ॥ ३८ ॥

नारायणाधीनतां च सर्वस्य जगतो वदन् ।
फलं कथितवान् व्यासो देवो नारायणः स्वयम् ॥ ३९ ॥

योगो ज्ञानं तथेत्यादिपद्येन च चतुर्दश ।
विद्याः कलाश्चतुष्षष्टिः षट्शास्त्राणि हरेरिति ॥ ४० ॥

---

[1] विष्णोर्नामसहस्रस्य—घ.

यो भारतीभजनभावभवैकबुद्धि-
गम्भीरसूरिरिति सूरिजनप्रसिद्धः ।
नाम्नां निरुक्तिमकरोत्परतत्त्वसिध्यै
लोकाः पठन्तु निजकामितसत्समृध्यै ॥ ४१ ॥

द्व्यङ्केष्विन्दुमिते शके नरपतिश्रीशालिवाहाभिधे
श्रीसाधारणवत्सरे दिनकरे कन्यास्थिते चाश्विने ।
मासे स्याद्विजयाभिधा हि दशमी तत्रापि भं वैष्णवं
तत्काले सुसमर्पिता हरिपदे पद्यप्रसूनाञ्जलिः ॥ ४२ ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसञ्चारिणा
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतत्प्रतिनामपद्यकरणे ग्रन्थः समाप्तिं गतः ॥ ४३ ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा स्यात्समाप्ताख्यमञ्जरी ॥ ४४ ॥

इति श्रीगम्भीरभारतीसूरिविरचितसहस्रनामविवृत्यपरपर्यायपद्यप्रसूनाञ्जलौ
समाप्ताख्यमञ्जरी समाप्ता ।

---

श्रीकृष्णार्पणमस्तु